॥ श्रीः ॥

# वशिष्ठ रामायणम्।

श्री मद्वेद व्यास विरचितम्।

तदिदम्

रीवां नगर निवासि

वैश्य वंशोद्भव श्री प्रधान कामता प्रसादात्मजेन बाबू शिव प्रसाद गुप्तेन वितरणार्थ प्रकाशितम्॥

प्रथम बार
१०००

॥ श्रीः ॥

# वाशिष्ठ रामायण।

श्री मद्वेद व्यास विरचित।

जिसे

रीवां नगरस्थ (हाईस्कूल) के संस्कृत प्रधान अध्यापक श्री जगन्नाथ शास्त्री द्वारा संशोधन करा के

रीवां नगर निवासी

वैश्य बंशोद्भव श्री प्रधान कामता प्रसादात्मज बाबू शिवप्रसाद ने

वितरणार्थ छपवाया।

पुस्तक मिलने का पता—बाबू शिव प्रसाद प्रधान तरहटी बाबा का कटरा रीवां।

प्रथमवार १००० } संवत् १९६५ { केवल वितरणार्थ

मिश्र जगन्नाथ बद्री प्रसाद "रघुराजनगर" सतना प्रेस में छपी।

# भूमिका।

 श्रीरामंपरमाराध्यं सच्चिदानन्दविग्रहम् ॥ नामन्नामन्त्ररूपन्त मिदंविज्ञापयामिवः ॥ १ ॥
 इन्ट्रेन्साख्यामाङ्गलभाषापरीक्षामुदवातरम् ॥ यदाततोयावदासभूतिर्नासिंतदन्तरे ॥ २ ॥
संस्कृताध्ययनेजाता मतिमर्महितैषिणी ॥ प्रवृत्तोहंयदाध्येतु मन्तरायस्तदाभवत् ॥ ३ ॥ उपन्या-
सादिरूपेण संस्कृताध्ययनंततः ॥ शैथिल्यमगमत्सर्वं मनोरथशतैर्युतम् ॥ ४ ॥ यदाहंभूतिमान्जात
स्तदातद्व्यसनम्महत् ॥ उपन्यासादिपठन मयत्नंविलयंगतम् ॥ ५ ॥ ततःपिपाठिषाजाता
ध्यात्मरामायणस्यमे ॥ अधीत्यतदहंकृत्स्न मार्षरामायणंवृहत् ॥ ६ ॥ आरब्धवांस्तदाध्येतुं काले-
तस्मिन्सुखप्रदे ॥ मद्गेहसन्निधौ श्रीमद्रामलीलाभिलाषुकैः ॥ ७ ॥ आरब्धोभिनयस्तस्या लीला-
याबालकैःक्रमात् ॥ प्रतिक्षणञ्चमण्डल्यां चर्चारामायणेभवत् ॥ ८ ॥ तस्मान्मद्गमनंतत्र बाहुल्ये-
नाभवत्सदा ॥ व्युदस्यार्षममरुचिः प्रवृत्तातुलसीकृते ॥ ९ ॥ रामायणेतिबहला प्राधीतंचमयास-
कृत् ॥ भाषारामायणंसर्वं सटीकंप्राञ्जलस्तदा ॥ १० ॥ अथाभीक्ष्णंमार्गमाणो रामायणविधान्यहम् ॥
लब्धवान्कतिचित्तानि नामतोवच्मिसाम्प्रतम् ॥ ११ ॥ आदिरामायणंमन्त्र रामायणमथापरम् ॥
आनन्दाख्यंचसत्याख्यं महारामायणंतथा ॥ १२ ॥ रामाश्वमेधंहनुमन्नाटकंहृदयङ्गमम् ॥ अन्ये- 
रामकथास्वादुरसा ग्रन्थाविलोडिताः ॥ १३ ॥ एकदामत्सुहृद्विद्वान्म धुरोच्चकथत्कथाः ॥ रामा-

यथांवसिष्ठेन प्रणीतमपिवर्त्तते ॥ १४ ॥ इतितद्वचनंश्रुत्वा तदर्थंयातितंमया ॥ मुद्रायन्त्रालयाध्यक्षाः पृष्टाअस्याङ्कनम्प्रति ॥ १५ ॥ नक्कापिमुद्रितमिति सर्वैःप्रहितमुत्तरम् ॥ तदैवालिखितस्यास्य प्राप्तौ-यत्नोमयाकृतः ॥ १६ ॥ एकदासुहृदांमध्ये रामायणकथाहिताः ॥ कुर्वाणोहंपण्डितेन त्रिवेदेन द्विजन्मना ॥ १७ ॥ शर्मान्तबलदेवेन गदितःकृपयाहितम् ॥ वसिष्ठेनप्रणीतं यत्प्रख्यातंभुवि पापनुत् ॥ १८ ॥ रामायणंमत्समीपे वर्त्ततेलेखितंशुभम् ॥ तदमृतसमंवाक्यं श्रुत्वासंहृष्टमानसः ॥ १९ ॥ रोमाञ्चितशरीरःसन् धन्यवादानपूरयम् ॥ मुद्रापयित्वातत्सर्वं शोधयित्वाविचक्षणैः ॥२०॥ वितरिष्यामिसर्वेभ्यो भक्तेभ्यइतिचाब्रवम ॥ ततोमत्सुहृदःस्निग्धाः प्राशंसन्मद्वचोखिलम् ॥ २१ ॥ तदेतद्राममोदार्थं भक्तानांहितकाम्यया । निर्व्यलीकेनमनसा मयामुद्रापितंहितम् ॥ २२ ॥ तेन-श्रीभगवान्रामः करुणावरुणालयः ॥ भक्तभक्तिप्रदोनित्यं प्रीयतांशंचमेदिशेत् ॥ २३ ॥ पाठालये राजकीये संस्कृताध्यापिशास्त्रिणम् ग्रंथसंशोधनकरं जगन्नाथंप्रपूजये ॥ २४ ॥ यःपुस्तकस्यसंशोधे महान्तंयत्नमातनोत् ॥ मधुरंतम्प्रसादान्तं धन्यवादैःप्रपूजये ॥ २५ ॥ सर्वान्सुहृज्जनान्प्रेमपीयूष-रसपूरितान् ॥ मुद्रणानुमतेदातॄन सहर्षस्तौमितानहम् ॥ २६ ॥ भक्तारामरसायनोत्थ परमान-न्दाश्रिताःसूरयो दाक्षिण्यैकनिकेतनाः सुचरितानिर्व्याजदानोद्यताः ॥ सन्तोयेत्रवसान्तितान्परमया 
स्तुत्यास्तुवन्प्रार्थये पाठंचास्यविधायमांसुकृतिनंवृत्तार्थकंकुर्वताम् ॥ २७ ॥ यदापाठंकारिष्यन्ति

ग्रन्थस्यास्यविमत्सराः । कृतकृत्यंतदात्मानं मंस्यामिविगतस्पृहः ॥ २८ ॥ श्रीरीवाराजराजात्सुन-
यनतरिपोःप्राप्तमन्त्रिप्रतिष्ठे जातोवंशेविशोयःप्रथितगुणगणःकामदस्यप्रसादः ॥ तस्यैवाहंतनूजो-
गुरुपदनिरतोयःशिवस्यप्रसादो ग्रन्थंरामायणाख्यंवितरतिपरतोयाचमानःशमिष्टात् ॥ २९ ॥

# भूमिका भाषा ।

श्री सच्चिदानन्द परब्रह्म परमपूजनीय महाराज रामचन्द्र को बारंबार नमस्कार करके वक्ष्यमाण बृत्तान्त प्रकाशित करता हूं ॥

पाठशाला से (इन्ट्रेन्स) की परीक्षा उत्तीर्ण करने के पश्चात् जब तक नौकरी नहीं मिली इस अन्तर में मेरी अभिरुचि संस्कृत पढ़ने की हुई और मैं संस्कृत पढ़ने लगा परन्तु साथही अकस्मात् प्रायः उपन्यासों के पढ़ने का व्यसन हुआ यहां तक कि संस्कृत का पढ़ना शिथिल प्राय हो गया परन्तु जब मैं नौकर हो गया तब उपन्यास पढ़ने का व्यसन आप से आप जाता रहा और मेरी इच्छा अध्यात्म रामायण पढ़ने की हुई उसको समाप्त करके बाल्मीकीय पढ़ने लगा ॥

बाल्मीकीय मेरी समाप्त नहीं हुई थी इसी समय में मेरे गृह से थोड़े ही दूर पर बालकों ने रामलीला करना प्रारम्भ किया रामलीला मण्डली में अहर्निशि रामायण ही की चर्चा हुआ करती और बहुधा वहां मेरा आना जाना हुआ करता था इस कारण से मेरी रुचि तुलसी कृत रामायण के तरफ हुई इसलिये उसको मैं आनुपूर्वी आदि से अन्त तक उसके अर्थज्ञों से पढ़ने की रीति से पढ़ डाला और बहुत सी टीकाओं को भी देखा ॥

इसके पश्चात् ढूँढ़ २ कर जहां तक रामायण मुझको मिले अर्थात् आनन्द रामायण आदि रामायण मंत्र रामायण सत्योपाख्यान महारामायण नृसिंह तथा पद्म पुराणान्तर्गत रामाश्वमेध हनुमन्नाटक अद्भुत रामायण प्रभृति ग्रन्थों को पढ़ा और सुना मैं पं० मधुर प्रसाद से सुनता था कि एक ग्रन्थ वशिष्ठ रामायण नामक है जिसको बहुत समय हुआ आप पढ़ चुके थे ॥

मैंने इस ग्रन्थ को सब यन्त्रालयों में पत्र प्रेषित करके अनुसन्धान किया परन्तु मुझको यही उत्तर मिला कि अब तक यह पुस्तक मुद्रित नहीं हुई तब मैं लिखी पुस्तक ढूँढ़ने लगा ॥

एक दिन मैं अपने मित्रों के साथ बैठा रामायण विषयक वाक्‌विनोद करता था अकस्मात् यहां के श्री त्रिपाठी पं० बलदेव राम जी के मुख से यह बात सुनी कि आप के यहां एक प्रति वशिष्ठ रामायण की पुस्तक है ॥

मुझको इस बात के सुनने से अत्यन्त हर्ष हुआ मैं उस पुस्तक के उपलब्धि के बदले उक्त पण्डितजी को अनेक धन्यवाद देकर कृतज्ञ बनता हूं ॥

मैंने उसी समय यह निश्चित किया कि इसको मुद्रित कराके वितरण करूं मेरी इस इच्छा को मेरे सभी मित्रों ने जो उस समय उपस्थित थे प्रशंसा की और मैं भी इस कार्य के करने के लिये तत्पर हुआ ॥

हाई स्कूल रीवां के प्रधान अध्यापक श्री जगन्नाथ शास्त्री जी ने इसके संशोधन में अत्यन्त परिश्रम उठाया है अतएव मैं आप के इस उपयोगी कार्य्य पर अपना हार्दिक धन्यवाद प्रकाश करता हूं ॥

एवं पं० मधुर प्रसाद जी ने इस कार्य में उक्त शास्त्री जी के समीपवर्ती रह कर संशोधनादि तथा समय पर बहुत सी उचित सहायता दी है अतः मैं इनको भी धन्यवाद का पात्र समझता हूं ॥

मैं अपने मित्रों को भी जिनकी इस ग्रन्थ के छपने में अनुमति थी सहर्ष धन्यवाद देकर पाठकों का प्रार्थी होता हूं कि यदि आप लोग इसको सादर पढ़ें गे तो मैं अपने को कृत कार्य समझूंगा ॥ अलम्

आपका कृपा कांक्षी

श्री प्रधान कामता प्रसादात्मज

**बाबू शिव प्रसाद**

मोहल्ला तरहटी (रीवां) ॥

श्रीगणेशायनमः ॥ शतानन्दोमहातेजा वशिष्ठंसत्यवादिनम् ॥ अपृच्छद्रामचरितं मारुतेर्विजयं
 शुभम् ॥ १ ॥ प्राप्तराज्योरघुश्रेष्ठः सिंहासनास्थितःप्रभुः ॥ पूजयामासतान्सर्वान्मुनीशान्द्रष्टुमाग-
 तान् ॥ २ ॥ उपविष्टेषुसर्वेषुआसनेषुसमंततः ॥ दधतुश्चामरेदिव्येसौमित्रिभरतावुभौ ॥ ३ ॥ धार-
यामासशत्रुघ्नः श्वेतछत्रमनुत्तमम् ॥ विभीषणोपिधर्मात्माराक्षसैःपरिवेष्टितः ॥ ४ ॥ वानराधिप-
तिस्तत्र सुग्रीवस्सांगदस्तदा ॥ जांबवान्शरभःशूरो गवयोगन्धमादनः ॥ ५ ॥ गवोगवाक्षःपनसो
हनूमान्मारुतात्मजः ॥ नलोदधिमुखोवीरः कुमुदोऽपिसितध्वजः ॥ ६ ॥ रंभःशतबलिर्नीलःसुषेणो
द्विविदादयः ॥ उपतस्थुर्महात्मानंसर्वेवानरपुंगवाः ॥ ७ ॥ स्थितेषुतेषुसर्वेषु आसनानिपृथक्पृथक्
अथाब्रवीद्रामचन्द्रोवशिष्ठमृषिसत्तमम् ॥८॥ शृणुष्वमुनिशार्दूलवचनंममसाम्प्रतम् ॥ अस्मत्प्रयोजनं
सर्वमांजनेयेनयत्कृतम् ॥ ९ ॥ पुरागोदावरीतीरेपंचवट्यांमयिस्थिते ॥ मैथिलीलक्ष्मणाभ्यांयत्तत्रा-
गत्यदशाननः ॥१०॥ लक्ष्मणांमांचवैदेहींवंचयित्वामृगेणसः ॥ भिक्षुरूपेणतांहृत्वातदालंकामुपागमत्
॥११॥ हतंजटायुषंदग्ध्वा कबन्धंविनिपात्यच ॥ शवरीदर्शनंकृत्वा पम्पातीरेस्थितोऽस्म्यहम् ॥ १२ ॥
विप्ररूपेणचागत्यकृत्वासम्भाषणंमया ॥ सूर्य्यात्मजेनहनुमान्ममश्रेयोह्यकारयत् ॥ १३ ॥ हत्वातं 
वालिनंराज्येसुग्रीवमभ्यषेचयम् ॥ नानादेशस्थितान्सर्वानानयित्वाकपीश्वरः ॥ १४ ॥ दिशःप्रस्था-
पयामाससीतायाःपरिमार्गणे ॥ अंगदप्रमुखैर्वीरैर्वानरैस्सहमारुतिः ॥ १५ ॥ दक्षिणांदिशमुद्दिश्य

गृहीत्वामुद्रिकांमम॥ गत्वाऋक्षविलंतत्रपुनरुत्थायमारुतिः ॥ १६ ॥ सम्पातिवचनात्तत्रलंघयित्वा
महोदधिम् ॥ लङ्कांसर्वांसमालोक्य तत्राशोकवनेस्थिताम् ॥ १७ ॥ राक्षसीभिःपरिवृतां मैथिलीं
मत्परायणाम् ॥ सम्भाष्यमुद्रिकांदत्वानिवेद्यकुशलंमम ॥१८॥ वनभङ्गंततःकृत्वाहत्वाशीतिसहस्र-
कम् ॥ तोरणंमर्दयित्वाथसप्तमंत्रिसुतानपि ॥ १९ ॥ निष्पिष्याक्षंजम्बुमालिं ब्रह्मास्त्रेणनिबन्धितः॥
रावणेनचसम्भाष्यदग्ध्वावालाग्निनापुरीम् ॥ २० ॥ पुनःसीतांसमालोक्याशिरोरत्नंप्रगृह्यच ॥ पुन-
श्चोदधिमुल्लंघ्यवानरैस्सहसंगतः ॥ २१ ॥ जानक्याकुशलंसीता शिरोरत्नमदात्तदा ॥ ततःसुग्रीव
सहितः सिंधुतीरमुपागमम् ॥ २२ ॥ नलस्यसेतुमार्गेणकृत्वासागरलंघनम् ॥ अतिकायंमहाकायं
देवान्तकनरान्तकौ ॥२३॥ यूपाक्षंचविरूपाक्षंकुंभकर्णंमहाबलं ॥ कुंभंनिकुंभंरक्षांसिशक्रजेतारमाहवे
॥२४॥ ततोमूलवलंसर्वंरावणंहतवानहम् ॥ आंजनेयसहायेनकृतमस्मत्प्रयोजनम् ॥ २५ ॥ आंजने
यस्यमाहात्म्यमाश्चर्यमभवन्मम ॥ त्रिषुलोकेषुविख्यातोहनूमानतुलोभवत् ॥२६॥ इत्युक्त्वाविररामा
थरामःसत्यपराक्रमः ॥ सभ्यास्तेमुनयःसर्वे साधुसाध्वितिचाब्रुवन् ॥२७॥ ततःकोलाहलंचक्रूराजानः
कपिकुंजराः ॥ पूजयामासुरत्युग्रंमारुतिंकपिकुंजरम् ॥२८॥ रामस्यवचनंश्रुत्वा वशिष्ठोवाक्यमब्रवीत् ॥ 
रामराघवराजेन्द्र यदज्ञातंतत्त्वयोदितम् ॥ २९ ॥ अविज्ञातंत्वयाप्येतदाञ्जनेयकृतंशृणु ॥ आञ्जने
यस्यमाहात्म्यं विज्ञातंयोगचक्षुषा ॥ ३० ॥ वशिष्ठस्यवचःश्रुत्वारामोऽपिपुनरब्रवीत् ॥ कदाकृतंहनु-

मताह्याविज्ञातंकथंमया ॥३१॥ आंजनेयस्यमाहात्म्यंश्रोतुमिच्छामिसुव्रत ॥ तत्सर्वंवदतत्वेनपरंकौतू
हलंहिमे ॥३२॥ इतिवदतिचरामे मारुतेर्यत्तुवीर्य्यं सकलमपितदानीं श्रोतृहर्षप्रदंच ॥ निखिलमुनि
समाजेनित्यमानन्दकारिसवितृकुलपुरोधा अब्रवीत्तंवशिष्ठः ॥३३॥ इति श्री वाशिष्ठेरामायणे उत्तर
चरित्रे मैरावणबधे हनुमद्विजये प्रथमोध्यायः ॥ १ ॥ श्रीवशिष्ठउवाच ॥ रामचन्द्रमहाबाहो साव-
धानमनाःशृणु ॥ आञ्जनेयस्यमाहात्म्यं श्रोतॄणामघनाशनम् ॥ १ ॥ पुत्रपौत्रप्रदंनॄणां सर्वसौभाग्य
दायकम् ॥ सर्वाभीष्टप्रदंनित्यं भुक्तिमुक्तिफलप्रदम् ॥ २ ॥ श्वेतद्वीपान्तरेरम्ये लवणोदधिवेष्टिते ॥
लङ्कायाउत्तरेभागे पद्मकोशसरोवरे ॥ ३ ॥ योजनत्रयविस्तारे हैमपद्मोपशोभिते ॥ मत्स्यकच्छप
संकीर्णेजलजन्तुविराजिते ॥ ४ ॥ तस्मिन्सरसिपद्मंस्यादेकयोजनविस्तरम् ॥ पद्मस्यनालमार्गेण
गमनंरक्षसांविभो ॥ ५ ॥ तत्रपाताललंकेति विख्याताभूत्पुरीशुभा ॥ सौवर्णराजतंताम्रं कांस्यं
कालायसंत्रपु ॥ ६ ॥ स्फाटिकंतैर्विराचताः प्राकाराःसम्विरेजिरे ॥ देवतानामधृष्यासातुलायंत्रेण
शोभिता ॥ ७ ॥ तत्रमैरावणोनाम राजारावणसोदरः ॥ शतास्योवर्त्ततेरामदेवदानवदर्प्पहा ॥ ८ ॥
सीताहरणकोपेन त्वयाभग्नेतनूभवे ॥ शक्रजेतरिसोदर्य्येकुंभकर्णेमहाबले ॥ ९ ॥ कुंभेनिकुंभेऽति- ३
कायेत्रिमूर्द्धनिनरांतके ॥ देवान्तकेप्रहस्तेचरावणोदुःखकर्शितः ॥ १० ॥ त्यक्त्वास्नानान्नपाना॥नि
चिंताग्रस्तोबभूवह ॥ तदासस्मारसोदर्य्यंमैरावणमतीबलम् ॥ ११ ॥ तत्क्षणेनसमागम्यप्रणतःप्रा-

ञलिस्थितः ॥ चिंतयाम्लानवदनं पप्रच्छाग्रजमादरात् ॥ १२ ॥ त्रिलोकजयिनोराजन् कथंचिंता
तवाधुना ॥ गोप्यंचेन्नहिराजेन्द्र श्रृणुयांवदतत्वतः ॥ १३ ॥ स्मरणादागतंदृष्ट्वापृच्छंतांविनयेनतम् ॥
दीर्घमुष्णंविनिश्वस्य रावणोवाक्यमब्रवीत् ॥ १[illegible] ॥ देवदानवगंधर्व रक्षोयक्षोरगैर्मम ॥ मृत्युः
पराजयोनास्ति मर्त्याद्रामादुपस्थितः ॥ १५ ॥ हताःपुत्राःसुहृदभृत्य बांधवामात्यसोदराः ॥
कुंभकर्णोमहावीर्य्यः शक्रजेतामहास्त्रवित् ॥ १६ ॥ त्रिलोकजयिनौशूरौहतौरामेणसंयुगे ॥ एतदर्थं
महंदीनः सुतभ्रातृवधंस्मरन् ॥ १७ ॥ दुःखसागरसम्मग्नम्मामुद्धर्तुंत्वमर्हसि ॥ पूर्वंकदाचिन्नाहं-
त्वांदैन्यंवचनमुक्तवान् ॥ १८ ॥ इत्युक्त्वामंत्रकालोयमस्माकंराक्षसोत्तम ॥ इतितस्यवचः श्रुत्वा
हृदिध्यात्वासराक्षसः ॥ १९ ॥ मैरावणोह्यवोचत्तंरावणंराक्षसाधिपम् ॥ मायाबलसमायुक्तो गृही-
त्वारामलक्ष्मणौ ॥ २० ॥ हत्वाकपिबलंसर्वमागच्छेयंतवान्तिकं इत्युक्त्वासहसोत्थाय नमस्कृत्या-
थराक्षसः ॥ २१ ॥ प्रदक्षिणात्रयंकृत्वाह्यथोत्प्लुत्यविहायसा॥ मैरावणोययौतत्रलंकांपातालसंज्ञितां
॥ २२ ॥ इति श्री वाशिष्टेरामायणे उत्तरचारित्रे हनुमद्विजये द्वितीयोध्यायः ॥ २ ॥ वशिष्ठउवाच॥
मैरावणः प्रविश्याशुलंकांपाताल संज्ञितां ॥ भार्यामाहूयमातंगीमवोचद्रावणोदितम् ॥ १ ॥ ममा-
ब्रवीद्राक्षसेन्द्रोहत्वात्वंरामलक्ष्मणौ ॥ आगच्छशीघ्रंयाहीति तेनप्रोक्तोस्म्यहंप्रिये ॥ २ ॥ अवग-
च्छामिरामस्यतत्त्वंनारदवाक्यतः ॥ रावणःकुत्रगच्छेद्वातथाकिंसांप्रतंविभो ॥ ४ ॥ देवदेवोत्तमो

रामोरक्षोनाशायजातवान् ॥ सीतालक्ष्मीस्तुसंभूतासर्वराक्षसनाशिनी ॥५॥ किंदेवदेवदेवेन रामेण
सहविग्रहः ॥ मायाहिश्रृणुमद्वाक्यं रामलक्ष्मणसंनिधिम् ॥ ६ ॥ भार्य्ययाचैवमुक्तःसन्भार्यांमैराव-
णोब्रवीत् ॥ चन्द्रहासेनमांहंतुंदशास्यःक्रोधमाहरत् ॥ ७ ॥ गच्छामीतिब्रुवन्तेन परित्यक्तोस्मि
सांप्रतम् ॥ अहंरामेणनिहतोमुक्तिंगन्तास्मिवल्लभाम् ॥ ८ ॥ रावणेनहतस्याद्यानिरयोमेभविष्यति ॥
इतिमत्वाप्रियेगन्तारामलक्ष्मणसंनिधिं ॥ ९ ॥ सूचीमुखश्चघटको मंत्रिणौममराक्षसौ ॥ गच्छामि
ताभ्यांसहितो यत्रसावानरीचमूः ॥ १० ॥ इतिश्रुत्वातुसरमापत्येदूतमयापयत ॥ विभीषणंनमस्
कृत्यदूतोवाक्यमुवाचह ॥ ११ ॥ रावणप्रेरितश्चायंमैरावणइतिश्रुतः ॥ मायाबलसमायुक्तोगृहीत्वा
रामलक्ष्मणौ ॥ १२ ॥ यातुमिच्छतिदुष्टात्माह्यप्रमत्तोभवान्भव ॥ इत्युक्त्वासहसादूतः पुनर्लंकां
ययौतदा ॥१३॥ दूतस्यवचनंश्रुत्वाधर्म्मात्मासविभीषणः ॥ हनूमंतंसमाहूयवचनंचेदमब्रवीत् ॥१४॥
मायावीवलवान्शूरो मैरावणइतिश्रुतः ॥ रावणेनप्रेरितःसन्गृहीत्वारामलक्ष्मणौ ॥ १५ ॥ यातु
मिच्छतिदुष्टात्माभवान्रक्षतुसांप्रतम् ॥ मध्येनिधीयतौसर्वान्परितःपरिवेष्ट्यच ॥१६॥ वालजाले-
नचाच्छाद्यह्यप्रमत्तोभवान्भवेत् ॥ शिविराणिपरामृश्यपुनर्यास्येतवान्तिकम् ॥ १७ ॥ एवमुक्तस्त्व



सौतेनमध्येतौरामलक्ष्मणौ ॥ निधायवानरानीकंपरितःपरिवेष्ट्यच ॥ १८ ॥ वालेनावेष्ट्यसर्वत्र
प्राकाररचितातदा ॥ आपातालंप्रविश्याथसतस्थौकपिकुंजरः ॥ १९ ॥ गत्वाविभीषणःसोपिशिवि

राणिपरामृशन् ॥ शाखामृगगणान्सर्वान् वीक्षयन्विचचारसः ॥ २० ॥ ततःपरंसवलवान्मायावी
राक्षसेश्वरः ॥ मंत्रिभ्यांसहितःशूरःकिंचिद्दूरमुपाश्रितः ॥ २१ ॥ कस्मिन्प्रदेशेसंतिष्ठन्घटकंवाक्य
मब्रवीत् ॥ आगच्छश्रृणुमद्वाक्यंरामसैन्यंविलोकयन् ॥ २२ ॥ क्वरामलक्ष्मणौकुत्रह्यांजनेयोविभी-
षणः ॥ विज्ञायसर्वमायाहि इत्युक्तोघटकोययौ ॥ २३ ॥ संप्राप्तःशिविरंतत्रदृष्ट्वातंतत्रमारुतिं ॥
प्रदक्षिणंततःकृत्वाबालस्यास्यहनूमतः ॥२४॥ अशक्यइतिमत्वाथघटकस्तुसमाययौ ॥ अशक्यंतत्र
गंतुंवावीक्षितुंवाकदाचन ॥ २५ ॥ वालेनपरिसंवेष्ट्यतत्रतिष्ठतिमारुतिः ॥ इतिब्रुवाणंघटकंदृष्ट्वा
मैरावणोब्रवीत् ॥ २६ ॥ अशक्यमितिमामुक्त्वंगच्छत्वंराक्षसाधम ॥ इतिप्रकुपितंतंवैदृष्ट्वासूचीमु-
खोब्रवीत् ॥ २७ ॥ अहंगच्छामिहेवीरदृष्ट्वातौरामलक्ष्मणौ ॥ तद्वानरवलंसर्वंत्वत्समीपंव्रजाम्यहं
॥ २८ ॥ इत्युक्त्वाप्रेषितस्तेनतत्रगत्वासराक्षसः ॥ तांभूमिंभेदयामासत्रिंशद्योजनमायतां ॥ २९ ॥
तत्राप्यालोक्यतद्वालंवज्राभकाठिनंचसः ॥ प्रदक्षिणत्रयंकृत्वाह्यभेद्यमितिचिंतयन् ॥ ३० ॥ मैराव-
णं पुनःप्राहयथाहघटकःपुरा ॥ सूचीमुखस्तदाप्राहश्रुत्वातद्वाक्यमद्भुतम् ॥ ३० ॥ हनूमतोवलंस-
र्ववालप्रक्षेपणंतदा ॥ मैरावणस्ततोधैर्य्याच्चिंतयामासवीर्य्यवान् ॥ ३२ ॥ इतिश्रीवाशिष्ठे रामायणे 
उत्तरचरित्रे हनुमद्विजये तृतीयोध्यायः ॥ ३ ॥ वशिष्ठउवाच ॥ दृष्ट्वातंमारुतिंतत्रवालप्राकारसंयु-
तम् ॥ तद्वानरवलंसर्वंपालयन्तौनृपात्मजौ ॥ १ ॥ अशक्यमितिमत्वाथसोप्यचिंतयदात्मनि ॥

असौहनूमान्वलवान्विख्यातवलपौरुषः ॥ २ ॥ रावणेश्वरशक्त्यातुसौमित्रेर्मूर्छितस्यतु ॥ पुनर्व्यजी-
व० रा० वयामासद्यानीयौषधिपर्वतम् ॥ ३ ॥ तिस्रःकोटीश्चगन्धर्वान्तत्रहत्वातुराक्षसान् ॥ मध्येपुनर्यथा-
स्थानंस्थापयामासपर्वतम् ॥ ४ ॥ एवंकृतंहनुमतामहत्कार्य्यंपुराखलु ॥ इदानींतुकथंवीरोमयावंचयि-
॥ ७ ॥ तुंक्षमः ॥ ५ ॥ इतिव्याकुलचित्तःसन्मुहूर्तंसमचिंतयत् ॥ मायाविभीषणोभूत्वासमीपंमारुतेस्-
तदा ॥ प्रहसन्मधुरंवाक्यं हनूमंतमभाषत ॥ ७ ॥ रामस्त्वयिवृथाकोपंचक्रेसौमित्रिणासह ॥ को
हेतुस्तस्यकोपस्यवदतत्वेनमारुते ॥ ८ ॥ अत्रमातिष्ठहेवीरपलायनपरोभव ॥ विभीषणेनैवमुक्तः
प्रत्युवाचानिलात्मजः ॥ ९ ॥ विभीषणशृणुष्वेदंत्वयाज्ञप्तोस्मिसांप्रतं ॥ अत्रस्थास्यामिहेवीरवाले
नावेष्ट्यतावुभौ ॥ १० ॥ अप्रमत्तोस्मिसर्वत्रसंरक्ष्येरामलक्ष्मणौ ॥ नास्तिमय्यपराधोपिनकृतोराक्ष
सेश्वर ॥ ११ ॥ विभीषणउवाच ॥ मारुतेदूरतास्तिष्ठगत्वाद्याहंतदंतिकं ॥ तवस्नेहंकरिष्यामिरामेण
सहमारुते ॥ १२ ॥ मायाविभीषणेनैवमुक्तस्तंहनुमान्कपिः ॥ अहंदूरंगमिष्यामिस्नेहंकुरुममानघ
॥ १३॥ इत्युक्त्वाहनुमान्वालंसंकोच्यदूरमास्थितः ॥ ततःप्रविश्यशिविरंवीक्ष्यतौरामलक्ष्मणौ ॥१४॥
नेत्रेचौरांजनंदत्वाललाटेतिलकंददौ ॥प्रकीर्य्यवानरानीकेमत्तचूर्णंशताननः ॥१५॥ माययातावदृश्यः ७
सन्पेटिकायांनिधायच ॥ नभोमार्गेणपातालेलंकायांप्रविवेशह ॥१६॥ भद्रकाल्यालयेपेटींसंस्थाप्यै
नांररक्षह ॥ शिविराणिपरामृश्यपुनरायाद्विभीषणः ॥ १७ ॥ विभीषणोब्रवीद्वीक्ष्यव्याकुलंमारुता

व० रा० तुमजम् ॥ विहायवानरबलंदूरात्तौरामलक्ष्मणौ ॥१८॥ तत्रकिंतिष्ठसेवीरप्रमत्तइवमारुते ॥ इतिब्रुवं
तंहनुमान् विभीषणमुवाचह ॥ १९ ॥ त्वमेवतत्रतिष्ठेतिमांसंप्रत्युक्तवानसि ॥ रामं च लक्ष्मणंचैव
॥ ८ ॥ कोपितंमयिचानघ ॥ २० ॥ नास्तिमय्यपराधोत्र किंकृतोवामयाप्रभो ॥ अहमेवंत्वयाज्ञप्तः स्थास्ये-
दूरतरोबलात् ॥ २१ ॥ एवमुक्तेहनुमताज्ञात्वामैरावणेप्सितं ॥ आत्मरूपधरेणैवं वंचितौरामलक्ष्म-
णौ ॥ २२ ॥ ततोहनुमतासाकं प्रविश्यशिबिरंमहत् ॥ प्रमत्तंव्याकुलबलंहष्ट्वाव्याकुलमानसः ॥२३॥
श्रीरामलक्ष्मणंतत्रध्यात्वासोप्याहमारुतिं ॥ मैरावणस्यवृत्तांतं शृणुवक्ष्याम्यतंद्रितः ॥ २४ ॥ आदौ
रामंनमस्कृत्यप्रवक्तुमुपचक्रमे ॥ २५ ॥ इतिश्री वाशिष्ठेरामायणे हनुमद्विजये चतुर्थोऽध्यायः ॥ ४ ॥
वशिष्ठउवाच ॥ विभीषणस्ततोध्यात्वा हनूमंतमुवाचह ॥ लंकायाउत्तरेभागेऽस्तेतद्वीपेमनोहरे ॥ १ ॥
शतयोजनविस्तीर्णे नानामृगसमाकुले ॥ नानाविहंग संघुष्टे मृगराजविराजिते ॥ २ ॥ मत्तमातंग
संयुक्ते गिरिनिर्झरशोभिते ॥ नानापुष्पफलोपेते लवणोदधिवेष्टिते ॥ ३ ॥ बहुराक्षसभूयिष्ठे सरोवर
विराजिते ॥ आलिहेमारविंदाभ्यां पद्मकोशंमहत्सरः ॥ ४ ॥ योजनत्रयविस्तीर्णंमत्स्यकच्छपसंकुलं ॥
कह्लारोत्फुल्लसंछन्नंशैवालव्रातसंकुलं ॥ ५ ॥ तस्मिन्सरस्येकपद्मंराजतेयोजनायतम् ॥ तस्यपद्मस्य ८
नालंचत्रिंशद्योजनमात्रकम् ॥ ६ ॥ आसीन्नालान्तरेमार्गस्तेन मार्गेणगच्छतां ॥ रक्षसांभवनंतत्र
दुर्घटंत्रिदिवौकसां ॥ ७ ॥ लंकाप्रतिनिधिःसासीद्विश्वकर्मविनिर्मिता ॥ तत्रपाताललंकेतिविख्याता

सापुरीशुभा ॥ ८ ॥ सौवर्णराजतंकांस्यंताम्रंकालायसंत्रपु ॥ सूर्य्यकांतिशिलाभिश्च कल्पितंविश्व
 कर्मणा ॥ ९ ॥ प्राकारैःसप्तभिर्युक्ता रक्षोगणनिषेविता ॥ शृंगैरट्टालकैरुच्चैर्गोपुरैःसमलंकृता ॥१०॥
 योजनत्रयविस्तीर्णा योजनानांदशायता ॥ वाजिवारणसंपूर्णारथयूथसमावृता ॥ ११ ॥ कश्यपस्यसुतः
श्रीमान्मायाबलसमन्वितः ॥ मैरावणइतिख्यातस्तांपुरींपर्य्यपालयत् ॥ १२ ॥ अस्माकमपिदायादो
दैत्यःकामचरोवली ॥ दुर्दंडीभगिनीतस्यकालकेयायतांददौ ॥ १३ ॥ नीलमेघःकालनेमिस्तयोस्तत्तन-
यावुभौ ॥ कालनेमिर्हतोयुद्धेत्वयैवकपिकुंजर ॥ १४ ॥ मैरावणस्तुनिगडैर्बध्वातौपालयन्पुरीं ॥
रावणप्रेरितःसोद्यरूपमास्थायमामकम् ॥ १५ ॥ तौगृहीत्वाययौतत्रभद्रकाल्यालयेशुभे ॥ पेटिकायां
विनिक्षिप्यस्वांतःपुरमुपाविशत् ॥ १६ ॥ प्रातःसूर्य्योदयेकाले भद्रकाल्यैसराक्षसः ॥ बलिंदास्यति
क्षिप्रंतौभवान्तद्गच्छमारुते ॥ १७ ॥ तत्रमैरावणंहत्वा गृहीत्वारामलक्ष्मणौ ॥ प्रयाहिसूर्य्यात्प्रागे
वयाहिशीघ्रंभवानितः ॥ १८ ॥ विभीषणवचःश्रुत्वाविस्मयात्प्रत्युवाचतम् ॥ गच्छामिलंकांपाताले
हत्वामैरावणंततः ॥ १९ ॥ सूर्य्योदयात्तौप्रागेवगृहीत्वायामितेन्तिकम् ॥ इत्युक्त्वातंनमस्कृत्यध्या-
त्वातौसकृतांजलिः ॥ २० ॥ उदीचींदिशिमुद्दिश्यलंघयामासमारुतिः ॥ श्वेतद्वीपंततःप्राप्यपद्म 
कोशसरोवरम् ॥ २१ ॥ एकयोजनविस्तारंहैमपद्मंददर्शसः ॥ मशकीकृतगात्रःसन्पद्मनालेनमारुतिः
॥ २२ ॥ प्रविश्यतांसमीक्ष्यैवं विस्मयंपरमंगतः ॥ तत्रास्थित्वामुहूर्त्तंतु पूर्वद्वारमुपागमत् ॥ २३ ॥

तत्रकश्चिन्महावीरः पुरुषःपुररक्षकः ॥ दृष्ट्वागतंहनूमंतमाययौमत्स्यवल्लभः ॥ २४ ॥ तंदृष्ट्वा चाप्यगणयन् जगामानिलविक्रमः ॥ गच्छंतंतंसमुद्वीक्ष्य तस्यमार्गमरुंधयत् ॥ २५ ॥ पंथानमवरुंधंतंहनूमानिदमब्रवीत् ॥ गच्छामिरामकार्य्यार्थं त्यजमार्गंमहामते ॥ २६ ॥ इतितद्वचनंश्रुत्वा प्राब्रवीन्मत्स्यवल्लभः ॥ रक्षामिसर्वतोलंकामहंमैरावणाज्ञया ॥ २७ ॥ जित्वामामत्रगंतव्यं युद्धं कुरुमयासह ॥ इत्युदीर्य्यहनूमंतं रुंधन्मार्गंसपूरुषः ॥ २८ ॥ मुष्टिनाताडयामास बज्राभेनसतं कपिः ॥ मात्स्योपिकुपितस्तस्मिन् मुष्टिनाभ्यहनत्कपिम् ॥ २९ ॥ परस्परंमुष्टियुद्धे जघ्नतुर्जयकांक्षिणौ ॥ पर्वताविवयुद्धेन राजेतेहस्तिनाविव ॥ ३० ॥ कंठीरवकिशोरौद्वौ मल्लयुद्धविशारदौ ॥ चरणाभ्यांचहस्ताभ्यां स्वबलेनैवमारुतिः ॥ ३१ ॥ उत्पाटयामासरुषा मुहुस्तंमत्स्यवल्लभः ॥ मुष्टिनाताडयामास मारुतेस्तत्रवक्षसि ॥ ३२ ॥ तस्यमुष्टिप्रहारेण मुहूर्तंमूर्छितःकपिः ॥ शिरःकंपं ततःकृत्वातमुत्थायाब्रवीत्पुनः ॥ ३३ ॥ भवान्कःकस्यपुत्रोसि कामातातवनोवद ॥ इत्युक्तःसमहावीरो हनूमंतमुवाचह ॥ ३४ ॥ झषीमाताहनूमान्मे पिताहंमत्स्यवल्लभः ॥ इतितद्वचनंश्रुत्वाविस्मितः कपिरब्रवीत् ॥ ३५ ॥ हनूमानतितेजस्वी ब्रह्मचारीजितेन्द्रियः ॥ हनूमतःक्वभार्य्यास्तिकथंवाकुत्रसंगमः ॥ ३६ ॥ उत्पत्तिस्तेकथंवीरतत्सर्वंवक्तुमर्हसि ॥ आंजनेयवचःश्रुत्वानामोत्पत्तिमुवाचसः ॥३७॥ सीतामन्विष्यमाणःसन् रामस्यह्यंगुलीयकम् ॥ आदायहनुमान्वीरोययौलंकांपुरानघ ॥ ३८ ॥

गच्छन्वेगेनवलवान्खेचरोलवणांवुधौ ॥ स्वेदविंदुंससर्ज्जाथभक्षयामासतंझषी ॥ ३९ ॥ तस्यामहं
प्रजातोस्मि यतःसंप्रतिमाव्रज ॥ इतिब्रुवंतंतंधीरंपुरुषंमत्स्यबल्लभम् ॥ ४० ॥ आलिंग्यहनुमाँस्तत्रत्व-

त्पिताहंवचोब्रवीत् ॥ सहायंकुरुमेपुत्ररामकार्य्यार्थिनोवयम् ॥ ४१ ॥ अहंरामस्यदासोस्मिसुग्रीव

सचिवोह्यहं ॥ मैरावणःसोर्द्धरात्रेप्रविश्यशिविरंतुनः ॥ ४२ ॥ विभीषणस्यवेषेणमोहयित्वाखिलां-
श्रमां ॥ आययौमाययालंकांगृहीत्वारामलक्ष्मणौ ॥ ४३ ॥ तत्रगच्छामिवेगेनत्यजमार्गममाधुना ॥
इत्युक्तवंतंपितरं हनूमंतमुवाचसः ॥ ४४ ॥ अहंमूर्छांगमिष्यामि तवमुष्टिप्रहारतः ॥ मम-
वक्षस्थलेशीघ्रं प्रहरस्वपुरींव्रज ॥ ४५ ॥ तच्छुत्वावचनंतस्यमुष्टिनाप्रहरत्तदा ॥ पातयित्वा
सतंधीरं पुरुषंमत्स्यबल्लभम् ॥ ४६ ॥ तत्पुरोपांतभागेषु चचारकपिकुंजरः ॥ ४७ ॥ इति श्री
वाशिष्ठे रामायणे उत्तरचरित्रे हनुमाद्विजये पंचमोध्यायः ॥ ५ ॥ वशिष्ठउवाच ॥ मैरावणस्तु
भगिनीमुद्वीक्ष्याहतदापुनः ॥ घटंगृहीत्वावेगेनजलमानयसांप्रतम् ॥ १ ॥ भद्रकाल्यास्तुपूजायै
दुर्दंडीयाहिसत्वरं ॥ तेनभ्रात्रासमादिष्टादुर्दंडीभगिनीतदा ॥ २ ॥ घटमादायवेगेनपूर्वद्वारमुपागता ॥
पत्तनाद्बहिरागत्यास्थित्वातत्रह्यचिंतयत् ॥ ३ ॥ अर्धरात्रेगतःप्राहलंकांमैरावणोह्यसौ ॥ गत्वातत्र
महावीरोभ्रातरौरामलक्ष्मणौ ॥४॥ रूपलावण्यसम्पन्नौक्षत्रियौलक्षणान्वितौ ॥ तिरस्कृतरतीनाथा 
वनूपमपराक्रमौ ॥ ५ ॥ आजहारासुरःश्रीमान्मायावलसमन्वितः ॥ पेटिकायांविनिःक्षिप्यभद्र

काल्यालयेधुना ॥ ६ ॥ निधायगत्वास्वंवेश्मभार्य्ययासहमोदते ॥ जातेसूर्य्योदयेतौद्वौवलिंदेव्यैप्रदा
स्यति ॥ ७ ॥ इतिचिंताकुलादीनानद्यास्तीरमुपागमत् ॥ निशम्यवचनंतस्यासूक्ष्मरूपेणमारुतिः
व०रा० ॥ ८ ॥ तामुपेत्यसुदुर्दंडीमिदंवचनमब्रवीत् ॥ कासित्वंकुतआसीनानामकिंतेकरोषिकिं ॥ ९ ॥ कर्त्त-
॥१२॥ व्यंतेमयाकिंतत्सर्वंशंसितुमर्हसि ॥ कस्त्वंवानररूपेणकिंवक्ष्यसिवदस्वतत् ॥ १० ॥ अहंदासोस्मि
रामस्यहनूमान्नामवानरः ॥ वंचयित्वात्मनःसर्वान्गृहीत्वारामलक्ष्मणौ ॥ ११ ॥ आययौसपुनर्लंकां
पातालेराक्षसेश्वरः ॥ भद्रकाल्यालयेतेनस्थापितौरामलक्ष्मणौ ॥ १२ ॥ अतोहमागतोदूरात्त्वंप्रवे-
शयमांपुरीं ॥ त्वयास्माकमिदंकार्य्यंपश्चादुपकरोमिते ॥ १३ ॥ इत्युक्त्वातेनदुर्दंडीसाब्रवीन्मारुता-
त्मजं ॥ मैरावणोममभ्राताभगिनीतस्यचास्म्यहं ॥ १४ ॥ कश्यपस्यतनूजास्मिदुर्दंडीतिसमाह्वया ॥
ममपुत्रंनीलमेघंकालकेयंचमत्पतिं ॥ १५ ॥ निगडैर्बंधयित्वासौपालयत्यसुरःपुरीम् ॥ प्राकारान्तर
मध्येतुगृहंमैरावणस्यच ॥ १६ ॥ द्वितीयेसालमध्येतुभद्रकाल्यालयोमहान् ॥ तस्मिन्देवालयेपेटीं
रामलक्ष्मणगर्भिताम् ॥ १७ ॥ वर्त्ततेन्तःपुरस्त्रीभिर्विनिक्षिप्यासुरेश्वरः ॥ वलिंदास्यतिदेव्यैस
पूजानन्तरमेवतौ ॥ १८ ॥ पूजाजलार्थमायाता भ्रात्रातेनप्रचोदिता ॥ तुलायंत्रेणसंयुक्तां कथं
प्रावेशयाम्यहं ॥ १९ ॥ मैरावणोविजानीयाद् यदिमांहंतुमिच्छति ॥ एवमुक्तःसहनुमान् दुर्दंड्या १२
पुनरब्रवीत् ॥ २० ॥ अहंप्रविश्यनगरं गृहीत्वारामलक्ष्मणौ ॥ हत्वात्वद्भ्रातरंयुद्धे सर्वानपिच

राक्षसान् ॥ २१ ॥ त्वत्पुत्रायप्रदास्यामि नीलमेघायभामिनि ॥ इदंतुनगरंसर्वं वस्तुव्रातसमाकुलं
॥ २२ ॥ इत्युक्तासाब्रवीद्वीर महद्भयस्त्वंमयागमः ॥ मक्षिकारूपमाश्रित्य हनूमान्मारुतात्मजः ॥
व०रा० २३॥ पूर्णकुंभोपरिस्थित्वा प्रविवेशपुरींततः ॥ पूर्वद्वारेतुलायंत्रं विपरीतंबभूवतत् ॥ २४ ॥ वैपरीत्यं
॥१३॥ ततोदृष्ट्वा दूरस्थाराक्षसास्तदा ॥ कोन्यःपुमानिहप्राप्तोनःपुरीमितिमेनिरे ॥२५॥ मारुतिंतंसमुद्वी-
क्ष्यमक्षिकारूपधारिणम् ॥ ग्रहीतुकामास्तेसर्वे राक्षसाःप्रविवेष्टिरे ॥ २६ ॥ अगृणंतंहनूमंतं मक्षि-
कारूपमाश्रितम् ॥ ततोहनूमान्ववृधे कामरूपीमहाबलः ॥ २७ ॥ जघानसर्वान्समरे राक्षसान्काम
रूपिणः ॥ बालेनबध्वाहस्ताभ्यां चरणाभ्यांचमुष्टिना ॥ २८ ॥ चचारसमरेवीरस्त्रिविक्रमइवापरः ॥
एवंतद्राक्षसान्हत्वा रूपंसंक्षिप्यमारुतिः ॥ २९ ॥ प्राकारान्तान्समुत्तीर्य भद्रकाल्यालयंगतः ॥
तत्रस्थांपेटिकांदृष्ट्वा रक्षांस्याहत्यरक्षिणः ॥ ३० ॥ गृहीत्वापेटिकांतत्र पत्तनाद्बहिराययौ ॥
अंधकारावृतेदिव्ये नानाकुंजविराजिते ॥ ३१ ॥ बहिःप्रदेशेह्येकांते वृक्षखंडोपशोभिते ॥
ऊर्ध्वंपेटींसमुत्थाप्य दृष्ट्वातौरामलक्ष्मणौ ॥ ३२ ॥ प्रमत्तौमत्तचूर्णेन निद्रालूएवसंस्थितौ
आच्छाद्योपरितांपेटीं तत्रैवस्थाप्यमारुतिः ॥ ३३ ॥ पुनःपातालंलंकायां प्राविशद्धंतुमासुरान् ॥
हतशेषाःसमागत्य मैरावणमथाब्रुवन् ॥ ३४ ॥ मैरावणासुरश्रेष्ठ महद्भयमुपस्थितम् ॥ कोप्यन्य- १३
स्त्वत्पुरींप्राप्य गृहीत्वारामलक्ष्मणौ ॥ ३५ ॥ निहत्यराक्षसान्सर्वान् विजयीसपुनर्ययौ ॥

पेटिकाहरणंश्रुत्वा क्रुद्धःसन्निर्ययौपुरात् ॥ ३६ ॥ इतिश्री वाशिष्ठेरामायणे उत्तरचरित्रे हनुमद्विजये षष्ठोऽध्ययः ॥ ६ ॥ वशिष्ठउवाच ॥ अथमैरावणस्तत्र समाहूयससत्वरम् ॥ कालकेयंनीलमेघं घटकंराक्षसोत्तमम् ॥ १ ॥ सूचीमुखंचरक्ताक्षं तदावाक्यमभाषत ॥ वयमुत्थायगच्छामो राक्षसैर्बहुभिर्वृताः ॥ २ ॥ आगच्छंतुरथारूढा राक्षसाःक्रूरदर्शनाः ॥ इत्युक्त्वाराक्षसान्सर्वान् रथमारुह्यसत्वरः ॥ ३ ॥ शक्तितोमरकुंतासि शूलपाट्टिशसंयुतं ॥ अष्टवाजिसमायुक्तं सचापंसहसारथिं ॥ ४ ॥ त्रिकोटिवलसंयुक्तो युद्धंकर्तुंसमाययौ ॥ अनुजग्मुर्महात्मानः शूलशक्त्यसिधारिणः ॥ ५ ॥ रथहस्तिहयारूढा राक्षसायुद्धकांक्षिणः ॥ सिंहनादंततःकृत्वा परिवव्रुःसमीरजं ॥ ६ ॥ दृष्ट्वागतान्सवेगेनशैलमुत्पाट्यतस्थिवान् ॥ तंवीक्ष्यनिर्भयंवीरमसहायंमहाकपिं ॥ ७ ॥ गर्जनंतर्जनंकृत्वाकालकेयादयस्तदा ॥ ववर्षुःशरवर्षाणिसर्वेलोकाश्चकंपिरे ॥ ८ ॥ सर्वांस्तानपिचिच्छेदवालहस्तांघ्रिघट्टनैः ॥ कालकेयस्तुशूलेनमहतामारुतात्मजं ॥ ९ ॥ विभेदसमरेधीरः करवालेनचाननं ॥ तस्यतीक्ष्णैर्दिव्यशरैः पुष्पितःकिंशुकोयथा ॥ १० ॥ चकाशेसमरेधीमान् हनूमान्कपिकुंजरः ॥ पादपांश्चसमुद्धृत्यकालकेयंजघानतं ॥ ११ ॥ शूचीमुखंतुशैलेनवालेनघटकंतथा ॥ एवंहत्वाहवेधीमान् तिस्रःकोटीश्चराक्षसान् ॥ १२ ॥ अथमैरावणंदृष्ट्वा रथस्थंराक्षसेश्वरम् ॥ ऊर्ध्वमुत्प्लुत्यसहसाध्वजांचिच्छेदसंयुगे ॥ १३ ॥ द्वौशैलौतुकराभ्यांतुगृहीत्वैकमपातयत् ॥ तस्यशैल

प्रपातेनभग्नस्तत्स्यन्दनोमहान् ॥ १४ ॥ अन्येनसारथिंचाश्वान्हत्वारावणमब्रवीत् ॥ वंचयित्वा
ब०रा० तुनःसर्वान्गृहीत्वारामलक्ष्मणौ ॥१५॥ स्वपुरींप्रविशन्नद्यचौर्य्येणैवहिवर्तते ॥ नोगच्छसिमयादृष्टो
नयामियममंदिरं ॥ १६ ॥ त्वामहंनत्यजाम्याशुकुरुयुद्धंमयासह ॥ इत्युक्त्वाहनुमाँस्तत्रसमुत्पाट्य
॥१५॥ महीधरं ॥१७॥ मैरावणस्याशिरसि पातयामासवीर्य्यवान् ॥ मैरावणस्तीक्ष्णशरैस्तंविभेदमहीधरम्
॥१८॥ धनुर्भंगंचकाराशुपादपेनसवेगवान् ॥ मैरावणस्तुविरथोहताश्वोहतसारथिः ॥१९॥ मायया
मोहयित्वाशुखमाविश्यतमग्रहीत् ॥ तस्यपादौचहस्ताभ्यांबध्वाभूमावपातयत् ॥२०॥ यन्मध्येससमु-
त्थाययत्कण्ठमवलम्ब्यसः ॥ उत्थायाशुशिरस्तस्यदूरतोविससर्जह ॥ २१ ॥ तच्छिरश्चकबन्धश्चसंगतौ
समरेपुनः ॥ तद्वीक्ष्यहनुमान्क्रुद्धस्तस्यवक्षस्यताडयत् ॥२२॥ मुष्टिनाभ्यहनत्सोपितेनमूर्छामवापसः॥
पुनःसंज्ञामवाप्याथ हनूमान्दिवमुद्धतम् ॥ २३ ॥ गृहीत्वाचरणौतस्य द्वेधाभूत्वापतद्भुवि ॥ पुन-
स्तौसंगतौदृष्ट्वा विस्मयेनह्यचिंतयत् ॥ २४ ॥ तत्कर्णान्तिकमागत्य यदस्यदिविसंस्थिता ॥ मैरा-
वणस्यप्राणाद्या वायवःपंचसंस्थिताः ॥ २५ ॥ भृंगस्वरूपास्तिष्ठन्ति गण्डशैलेहिमालये ॥ न
यान्तिमरणंयावद्भृंगास्तावत्सजीवति ॥ २६ ॥ पञ्चभृङ्गान्पुरोहत्वा ह्येनंसंहरमारुते ॥ इत्युक्त्वा १५
सापिद्रुदंडी विवेशान्तःपुरन्ततः ॥ २७ ॥ निशम्यवचनंतस्याः संक्रुद्धोरुद्रसम्भवः ॥ रौद्राकारेण
जज्वाल सर्वलोकभयङ्करः ॥ २८ ॥ मैरावणंपातयित्वा मुष्टियुद्धान्मुहुस्ततः ॥ तस्यकण्ठेपदंन्यस्य

दक्षवामंहिमाचले ॥ २९ ॥ धर्षयित्वास्यदेहंच त्रिविक्रमइवाबभौ ॥ गृहीत्वागण्डशैलेतु भृंगैःसह
समीरजः ॥ ३० ॥ कराभ्यांतंचनिष्पीड्य भृङ्गरूपंमहाद्युतं ॥ शिरश्चोत्पाटयामास धीरःसमर
मूर्द्धनि ॥ ३१ ॥ एवंहत्वासहनुमान् कालान्तकइवाबभौ ॥ राक्षसाहतशेषाश्च दृष्ट्वामैरावणंहतं
॥ ३२ ॥ पाताललंकांविविशुर्भयसंत्रस्तचेतसः ॥ ववर्षुःपुष्पवर्षाणि देवाःसाग्निपुरोगमाः ॥ ३३ ॥
देवदुंदुभयोनेदुर्ननृतुश्चाप्सरोगणाः ॥ वृन्दारकैस्तूयमानो हनूमान्सम्बभौततः ॥ ३४ ॥ इति
सकलसुरारिसंघानतुलपराक्रमोविजित्य ॥ रणभुविनिहत्यतंवभौ सुरसुनिसंघसुपूजितोहनूमान् ॥
३५ ॥ इतिश्रीमद्वाशिष्ठेरामायणे उत्तरचरित्रे हनुमद्विजये मैरावणवधोनाम सप्तमोध्यायः ॥ ७ ॥
वशिष्ठउवाच ॥ अथप्रविश्यलङ्कायां दुर्दंडीमिदमब्रवीत्॥ त्वद्भ्रातृपालितांलङ्कां त्वत्पुत्रायददाम्यहं
॥१॥ इत्युक्त्वाहनुमान्वीरो नीलमेघंतदात्मजम् ॥ तस्यांपाताललङ्कायामभिषिच्यविनिर्ययौ ॥ २ ॥
पुरान्निर्गत्यसंकेत स्थानंवीक्ष्यसमीरजः ॥ उत्सृज्यपेटिकांतत्र भुजेनिक्षिप्यतावुभौ ॥ ३ ॥ आज-
गामतदालङ्कां दशास्यपुरपालिताम् ॥ प्रविशन्नालमार्गेण शिविरेप्रविवेशह ॥ ४ ॥ विभीषणंपरि-
ष्वज्य नमस्कृत्येदमब्रवीत् ॥ आनीतौराक्षसश्रेष्ठ भ्रातरौरामलक्ष्मणौ ॥ ५ ॥ विभीषणस्तुतौवीक्ष्य
भ्रातरौरामलक्ष्मणौ ॥ समालिंग्यकपिश्रेष्ठमिदंवचनमब्रवीत् ॥ ६ ॥ हरिश्रेष्ठमहावीर कृतंकार्य्यं
महत्त्वया ॥ इत्युक्त्वाबहुमान्यैनं प्रहर्षमतुलंययौ ॥७॥ ततःसूर्य्योदयेजाते उत्थितौरामलक्ष्मणौ ॥

उद्वीक्ष्यवानरानीकं उत्तस्थौतद्रणाङ्गणे ॥ ८ ॥ ततःकोलाहलंचक्रुर्वानरास्तेमहौजसः ॥ तच्छ्रुत्वा
रावणोभूयो युद्धकांक्षीत्वयासह ॥ ९॥ स्वपुरान्निर्गतस्तस्मात् युद्धंकृत्वासुदारुणं ॥ अहोरात्रैस्त्व-
यारामनिर्जितोरणमूर्द्धनि ॥ १० ॥ तंरावणंरणेहत्वा ह्यभिषिच्यविभीषणं ॥ लङ्कायांसीतयासार्धं
भ्रातृभिःसहसंगतः ॥ ११ ॥ निवृत्तवनवासस्त्वमयोध्याराज्यमाप्तवान् ॥ आंजनेयस्यमाहात्म्यं
प्रसंगात्तेमयोदितम् ॥ १२ ॥ अजानतात्वयाकर्म कृतमेतेनराघव ॥ एतत्समोवलीभक्तस्तवराम
नविद्यते ॥ १३ ॥ वशिष्ठस्यवचःश्रुत्वा रामःसामात्यसोदरः ॥ संतुष्टःसन्नाञ्जनेयमिदंवचनमब्रवीत्
॥ १४ ॥ अत्रागच्छेत्भवान्वीर कृतमस्मत्प्रयोजनम् ॥ त्वयाशक्यमशक्यंतद्देवानामपिदुर्लभम्
॥ १५ ॥ एवमुक्त्वाहनूमंतं परिष्वज्यरघूत्तमः ॥ वज्रकीलितसौवर्णं कमलोत्पलराजितं ॥ १६ ॥
अष्टपत्रशतैःपद्मैः संयुतंहारमुत्तमम् ॥ ददौतस्मिन्सभामध्ये गृहीत्वाकपिकुंजरः ॥ १७ ॥ रामस्य
चरणौस्पृष्ट्वाशिरसातद्दधारसः ॥ तेनहारेणशुशुभे हनूमान्वानरोत्तमः ॥ १८ ॥ तारागणसमा-
युक्तः काञ्चनाचलसंनिभः ॥ निवर्त्यसर्वान्भूपालान्वानरान्राक्षसानपि ॥ १९ ॥ अन्तःपुरंप्रवि-
श्याथ सरेमेसीतयासह ॥ इदंपवित्रममलं महापातकनाशनम् ॥ २० ॥ हनुमद्विजयंपुण्य मैरा·
वणवधोज्वलम् ॥ विद्वत्प्रीतिकरंश्रोतुरायुरारोग्यकारणं ॥ २१ ॥ सर्वाभीष्टप्रदंनृणां पुत्रपौत्र
प्रवर्द्धनम् ॥ येश्रृण्वन्तिसदाभक्त्या येलिखन्तिपठन्तिच ॥ २२ ॥ तेपुत्रपौत्रैस्सहिता भुक्त्वा

भोगाननेकधा ॥ तदन्तेमुक्तिमायान्ति यावदाचन्द्रतारकम् ॥ २३ ॥ इति श्रीमद्वासिष्ठे रामायणे हनुमद्विजयोनामाष्टमोध्यायः ॥ ८ ॥ वशिष्ठ उवाच ॥ राघवस्याभिषेकार्थे स्वागतान्राजवल्लभान् ॥ तदाप्रेषयितुंरामश्चक्रमेजानकीपतिः ॥ १ ॥ भरतंलक्ष्मणंचैव शत्रुघ्नंभ्रातृवत्सलम् ॥ उवाचवचनं धीमानानयध्वंनृपानिह ॥ २ ॥ कौशलोभानुमन्तश्च मागधश्चित्रभाषणः ॥ युधाजित्केकयाधीशः काशिराजःप्रतर्दनः ॥ ३ ॥ सौराष्ट्राधिपतिर्धीमान् चित्रकेतुश्चवीर्य्यवान् ॥ अङ्गेश्वरोरोमपादो भीष्मोवैदर्भकोनृपः ॥ ४ ॥ मिथिलाधिपतिर्धीमान् जनकोराजवल्लभः ॥ विशालपुरनेताचसुमतिर्नामवीर्य्यवान् ॥ ५ ॥ सिंधुसौवीरकर्णाट लाटद्रविडगुर्जराः ॥ कलिङ्गचोलनेपाल मत्स्य भूनायकोत्तमाः ॥ ६ ॥ अन्येद्वीपान्तरेभ्योये समायाताधराधिपाः ॥ सर्वान्तान्मन्दिरेभोक्तुं निमंत्रय ममाज्ञया ॥७॥ रामस्यवचनंश्रुत्वाशत्रुघ्नभरतावुभौ ॥ गत्वातुसर्वभूपानांभोजनायनिमन्त्रिताः ॥८ ॥ आजग्मुःसर्वराजानो मुनयःशंसितव्रताः ॥ अगस्त्योनारदःकण्वोमार्कण्डेयोथगौतमः ॥ ९ ॥ विश्वामित्रोवशिष्ठश्च दुर्वासाभृगुरङ्गिराः ॥ कात्यायनःकश्यपोत्रिर्भरद्वाजोबृहस्पतिः ॥ १० ॥ जामदग्न्योवामदेवो तथाच्यवनकौशिकाः ॥ रुद्रुमृकण्डजावालिः सुतीक्ष्णःशंखलेखकौ ॥ ११ ॥ आहूतालक्ष्मणेनैव मुनयोभोक्तुमाययुः ॥ दूताहूतासमाजग्मुर्वानराजितकाशिनं ॥ १२ ॥ वानराधिपतिर्वीरः सुग्रीवोह्यंगदोनलः ॥ जाम्बवान्शरभोजम्भो गवयोगन्धमादनः ॥ १३ ॥ गजोगवाक्षः

पनसोहनूमान्धूम्रकेशरी॥ नीलोदधिमुखस्तारःकुमुदश्चाशितध्वजः॥१४॥ रम्भःशतवालिस्तीव्रःसुषेणो
विनतोपरे ॥ अनुजग्मुर्महात्मानःसर्वेवानरपुङ्गवाः ॥१५॥ पञ्चभिःकोटिभिर्युक्तोराक्षसैस्सविभीषणः॥
 गौरीसरस्वतीतत्रह्यनसूयाप्यरुन्धती ॥१६॥ अहल्यामुनिपत्न्यश्च लोपामुद्रातपस्विनी ॥ तारारुमा-
 दयःसर्वावानरीणांगणास्तदा॥१७॥शरमात्रिजटाचैवरामदर्शनलालसाः॥मनुष्यवेषायोषास्तावानरा-
राक्षसास्तदा ॥१८॥ दिव्याम्बरधराःसर्वे दिव्यभूषणभूषिताः ॥ दिव्यमाल्यगुणोपेताःसाकेतनगरेययुः
॥ १९ ॥ चतुर्दशात्रवर्षाणि सुप्त्वायापुनरुत्थिता ॥ तांसमीक्ष्यसमासीनां वैदेहीवाक्यब्रवीत् ॥२०॥
ऊर्मिलेश्रृणुवृत्तांतमात्मनश्चसुशोभने ॥ बनवासस्यगमनंमुनीनांदर्शनंतदा ॥२१॥ पञ्चवट्यांनिवासंच
ह्यनसूयाभिभाषणं ॥ आत्मापहरणंचैव रावणेनदुरात्मना ॥ २२ ॥ जटायुषश्चमरणं लंकायाश्च
निवेशनम् ॥ अशोकवनिकामध्ये राक्षसीगणगर्जनं ॥ २३ ॥ ऋक्षवानरगोपुच्छैः सङ्गमोराघवस्य
च ॥ आंजनेयस्यसंवादं मुद्रिकाहरणंतथा ॥ २४ ॥ आंजनेयस्यमाहात्म्यं सर्वराक्षसनाशनम् ॥
शिरोरत्नप्रदानश्च कुशलचात्मनस्तदा ॥ २५ ॥ रामयुद्धाभिगमनं समुद्रतरणंतदा ॥ लङ्कायास्तु
निरोधश्च निधनंसर्वरक्षसाम् ॥ २६ ॥ रामरावणयोर्युद्धं पंचत्वंरावणस्यच ॥ विभीषणस्यलङ्काया 
मभिषेकंमहोत्सवं ॥ २७ ॥ अग्नौप्रवेशंस्वस्यास्तु पुनरागमनंततः ॥ देवाभिभाषणंतत्र श्वशुरस्य
चदर्शनम् ॥२८॥ वरप्रदानंदेवानां पुष्पकारोहणंततः ॥ किष्किन्धादर्शनंतत्र भरद्वाजस्यदर्शनम् ॥२९॥

अयोध्यायांप्रवेशश्च सर्वंतेभिहितंमया ॥ इतिब्रुवंतीसासीता तयाचोर्मिलियासह ॥ ३० ॥ माण्डवि-
 श्रुतिकीर्तिभ्यां सहसान्तःपुरंययौ ॥ भरतंप्राहधर्मात्मा शत्रुघ्नस्तदनन्तरम् ॥ ३१ ॥ सर्वान्समा-
गतान्वीक्ष्य राजानस्स्वागताइति ॥ शत्रुघ्नस्यवचःश्रुत्वा भरतःकैकयीसुतः ॥ ३२ ॥ सप्तकक्षान्तरं
 दिव्यं सप्तार्चिर्दीप्तिशोभितम् ॥ सप्तावलयसंछन्नं सप्ताश्वकुलसंकुलम् ॥ ३३ ॥ प्रवेशयामास
तदा गृहंरत्नोपशोभितम् ॥ अलंकृतंवितानाद्यैः प्रमदापुंजरंजितम् ॥ ३४ ॥ शारिकाशुकसंकीर्णं
नीलकण्ठविराजितम् ॥ अरुन्धत्यादिनारीभिस्तस्मिन्संस्थाप्यराघवः ॥ ३५ ॥ आत्मनश्चगृहेरम्ये
नानालङ्कारशोभिते ॥ आंजनेयांगदौतारं राक्षसेन्द्रंविभीषणं ॥ ३६ ॥ सूर्यात्मजंनलंनीलं स्थापया
मासराघवः ॥ कुम्भसम्भवमुख्याश्च ऋषयोयेतपोधनाः ॥ ३७ ॥ कोशलप्रमुखाःशूराः राजानोमातु-
लादयः ॥ मिथिलाधिपतिश्चैव रामेणसहसंस्थिताः ॥ ३८ ॥ लक्ष्मणस्यगृहेरम्ये हर्म्यमालाविराजिते ॥
शत्रुघ्नस्यगृहेसर्वान्सैन्यान्संस्थाप्यराघवः ॥ ३९ ॥ साकेतनगरेधीमान् राजमार्गेषुसंस्थिताः ॥ राक्षसा-
वानराश्चैव श्रेणीभूताश्चकाशिरे ॥ ४० ॥ रम्भापत्राणिसाग्राणि सौवर्णानिवहून्यपि ॥ विप्राणांपुर-
तस्तेषां दापयामासवीर्य्यवान् ॥ ४१ ॥ सौवर्णभाजनान्येव स्त्रीणामेवसमान्वितम् ॥ अयुतंपाचकानांच
दृष्ट्वावाक्यमभाषत ॥ ४२ ॥ शाकादीनत्रभोशीघ्र मानयंत्वितिसोब्रवीत् ॥ भरतस्यवचःश्रुत्वा द्रुति 
वेगेनपाचकाः ॥ ४३ ॥ शाकादिसुपदार्थानि गृहीत्वातत्समाययुः ॥ कौशल्याचसुमित्राचकैकेय्यन्या

वं०रा०

॥२१॥

नृपाङ्गनाः ॥ ४४ ॥ सार्धत्रिशतकंस्त्रीणां तत्रतत्सर्वमाययौ ॥ सौवर्णेषुचपात्रेषु स्थापयामाससुव्रतः ॥४५॥ शाकादीनिचसर्वाणि व्यञ्जनानिचतास्त्रियः ॥ अन्नकूटैश्चबहुभिःपर्वतैरिवसंस्थितैः ॥४६॥ तदासूपकटाहैश्च शाकैर्लवणमिश्रितैः ॥ मरीचिचूर्णसंयुक्तैः राजसंसेचनैस्तदा ॥ ४७ सिद्धार्थरससंयुक्तैश्चूतखण्डैरलंकृतं ॥ तिलमाषादिचूर्णाद्यैरन्यैर्बहुभिरन्वितं ॥ ४८ ॥ चूतैश्चसहकारैश्च द्राक्षारम्भाफलैस्तदा ॥ पनसैर्नारिकेलैश्च फलैस्तत्कालसम्भवैः ॥ ४९ ॥ शर्करारवण्डसंयुक्तैः कपित्थैःकदलीफलैः ॥ शकलैर्नारिकेलानां हिंगुगंधसमन्वितैः ॥ ५० ॥ शुद्धांशुविम्बसदृशै र्माषपृष्ठकृतैस्तथा ॥ मरीचिखंडसंयुक्तैः शर्कराशकलैर्युतः ॥५१॥ करजैर्वटकैरुच्चैर्भक्ष्यैरुच्चावचैरपि ॥ लड्डुकैर्मोदकैरन्यैः षड्रसैश्चसमन्वितम् ॥ ५२ ॥ शाल्योदनंविनिक्षिप्य नानावस्तूनिन्यक्षिपन् ॥ आज्यंप्राज्यंसमानीय स्वर्णपत्रपुटेषुच ॥ ५३ ॥ राजतेषुविनिक्षिप्य भुञ्जध्वमितिचाब्रुवन् ॥ अहोतृप्तास्मभद्रंते इतितेषांप्रभुंजतां ॥ ५४ ॥ शुश्रावराघवःशब्दं तारंतस्मिन्गृहोत्तमे ॥ जानक्यासहरामस्तु भुक्त्वाशेषमनन्तरम् ॥ ५५ ॥ हनूमन्तंसमाहूय मधुरंवाक्यमब्रवीत् ॥ अत्रागच्छमहावीरमच्छेषंभोजनंकुरु ॥५६॥ इत्युक्त्वाप्रददौतस्मै स्वर्णपात्रंतुसंसदि ॥ आञ्जनेयस्तदादाय गृहीत्वाकवलत्रयम् ॥ ५७ ॥ भक्षयित्वासहनुमान्सभामध्येप्रसादजं ॥ ततस्तुरत्नसंयुक्तं गृहीत्वास्वर्णभाजनं ॥ ५८ ॥ अतसीवृक्षमारुह्य संतस्थौकपिकुंजरः ॥ मेलयित्वाचपत्राणि

अतस्यास्तद्वनौकसां ॥ ५९ ॥ सर्वैषांप्रददौधीरः सर्वशेषंसमुत्सृजन् ॥ हस्तप्रक्षालनंकृत्वा संतस्थुस्तेवनौकसः ॥ ६० ॥ आर्द्रकंपूगराशिंच नागवल्लीदलान्यपि ॥ भरतश्चसमानीय ताम्बूलानिददौमुदा ॥ ६१ ॥ उच्छिष्टानिचपात्राणि हैरण्यानिततःपरं ॥ सागरेनगरस्यैव परिखायांविन्याक्षिपन् ॥ ६२ ॥ दृष्ट्वाशंखसहस्राणि स्वर्णपात्राण्यनेकशः ॥ शृंगाण्यारुह्यतेसर्वे वानराराक्षसास्तदा ॥ ६३ ॥ विभीषणश्चसुग्रीवो विस्मयंपरमंगताः ॥ अथावरुह्यतेसर्वे रामं- राजीवलोचनं ॥ ६४ ॥ ऊचुःपरमसंहृष्टाःकृतांजलिपुटास्तदा ॥ रामराघवराजेन्द्र ह्यस्माकं परमाद्भुम् ॥६५॥ किमेतन्महदाश्चर्य्यंजायतेश्रोतुमिच्छताम् ॥ उच्छिष्टस्वर्णपात्राणिसंख्यतानिबहू- न्यपि ॥ ६६ ॥ केषांतद्वदहेराम श्रोतुंकौतूहलंहिनः ॥ निशम्यवचनंतेषा मुवाचैतान्महायशाः ॥६७॥ शृण्वन्तुमुनयःसर्वेसंभवामियुगेयुगे ॥ ममरूपाण्यनेकानिसन्तिभूभारनाशने ॥ ६८ ॥ जन्मान्तरसह स्रेषुमयाभुक्तानितान्यपि ॥ पतन्तिस्वर्णपात्राणि परिखायांदिनेदिने ॥६९॥ अहंराक्षसनाशायवैकु- ण्ठाद्भुविचागतः ॥ मानुषंजन्मसंप्राप्यरावणंचसबांधवं ॥७०॥ हत्वाक्रूरंदुरात्मानमयोध्यांपालयेपुरीं॥ एकादशसहस्राणि वत्सरंह्यत्रसंस्थितः ॥७१॥ मदीयमच्युतस्थानंयास्यान्त्यन्तेतपोधनाः ॥ द्वादश्याम- तसीपुष्पै र्येभुंजंतिद्विजोत्तमाः ॥ ७२ ॥ तेषांमुक्तिम्प्रदास्यामि मदीयंस्थानमव्ययम् ॥ रामस्य वचनंश्रुत्वातापसाराक्षसास्तदा ॥७३॥ सूर्य्यात्मजपुरोगास्ते वानराहर्षमाययुः ॥ इति श्रीवाशिष्ठे

रामायणेउत्तरचरित्रे श्रीरामभोजनप्रकरणंनामनवमोध्यायः ॥ ९ ॥ वशिष्ठउवाच ॥ ततोमहर्षि भिःशाकंभातृभिर्वानरैर्नृपैः ॥ रक्षोभिःसंभृतोरामःसभामण्डपमाययौ ॥१॥ दिव्यरत्नसमाकीर्णपितृ पैतामहंमहत् ॥ २ ॥ स्वर्णसिंहासनंतत्रययौरामः प्रतापवान् ॥ सिंहासनेस्थितेरामे पार्श्वभागे-स्थितास्तदा ॥ ३ ॥ सौमित्रिर्भरतश्चैवशत्रुघ्नस्तदनन्तरम् ॥ उभेचचामरेदिव्येश्वेतच्छत्रंसमादधुः ॥ ४ ॥ कुम्भसम्भवमुख्याश्च उपतस्थुर्महर्षयः ॥ सुग्रीवाङ्गदमुख्याश्च बानराःसविभीषणाः ॥५॥ तस्यैकतस्समातिष्ठन्नासनेषुसमंततः ॥ राजसंघाःपुरोभागेव्यतिष्ठन्राघवस्यच ॥ ६ ॥ आसनाधि-ष्ठितैःसाकंराजभिर्मुदमाययौ ॥ तस्मिन्नवसरेनिद्रासौमित्रिंभ्रातृवत्सलं ॥ ७ ॥ आप्रापवीरस्तत्का-लेदृष्ट्वासोप्यहसत्तदा ॥ दृष्ट्वाहसन्तंसौमित्रिंसभाशंकान्विताह्यभूत् ॥ ८ ॥ दशमासंस्थितापूर्व लङ्कायांयाचमैथिली ॥ अधुनासैवनिर्लज्जाभर्तुरङ्कमुपस्थिता ॥९॥ सौमित्रिरितिमांदृष्ट्वाहसत्येवन-संशयः ॥ लज्जानम्रमुखीह्यासीत्ताम्राक्षीरामसन्निधौ ॥ १० ॥ अग्रजंवालिनंहत्वासंग्रामेतान्निरागसं ॥ सूर्य्यात्मजस्तुसुग्रीवः कृतार्थइतिसंस्थितः ॥ ११ ॥ इतिसंप्रेक्ष्यसौमित्रिर्हसत्येवनसंशयः ॥ इतिल-ज्जाकुलोह्यासीत्सभायामध्यवाङ्मुखः ॥ १२ ॥ विभीषणोराक्षसेन्द्रोधर्मज्ञइतिविश्रुतः ॥ ज्येष्ठराव-णमाहत्यराज्यकांक्षीतिरस्कृतः ॥ १३ ॥ रामंशरणमापन्नइतिमांवीक्ष्यसाम्प्रतम् ॥ लक्ष्मणोयंहस-त्येवइतिचिंताकुलोभवत् ॥ १४ ॥ चतुर्दशाहिवर्षाणिवनवासंकुरुप्रभो ॥ इतिमात्रानियुक्तस्यभरतः २३

कैकयीसुतः ॥ १५ ॥ इदानींभ्रातुरङ्कस्य सापत्नेविनयान्वितः ॥ हसत्यस्मान्निरीक्ष्यैवह्ययमेवनसंशयः
॥ १६ ॥ रावणेनहृतांसीतांलंकापुरनिवासिनीं ॥ परहस्तगतांभार्य्यांतस्याःपालनतत्परः ॥ १७ ॥
व०रा० इतिमत्वातुसौमित्रिर्मामुद्वीक्ष्यहसत्यसौ ॥ इतिव्याकुलचित्तोभूद्रामोराजीवलोचनः ॥ १८ ॥
॥२४॥ अङ्गदःपितृहन्तारंसुग्रीवंसमुपाश्रितः ॥ इत्येषमांसमुद्वीक्ष्यहसत्येवनसंशयः ॥ १९ ॥ इतिचिन्ता
कुलश्चासीदेवंसभ्याःप्रशङ्किरे ॥ अथरक्तारविन्दाक्षोरोषेणमहतावृतः ॥ २० ॥ अब्रवीत्परुषंवाक्यं
सौमित्रिंभ्रातरंतदा ॥ सिंहासनेद्यसौमित्रेसभायांकेनहेतुना ॥ २१ ॥ ब्रूहिसत्यंभवान्वीरनोचेद्धन्
म्यत्रत्वामहम् ॥ इत्युक्त्वाखङ्गमादायहन्तुंसमुपचक्रमे ॥२२॥ कुपितंराघवंज्ञात्वासमुत्तिष्ठन्कृता-
ञ्जलिः॥ सौमित्रिरब्रवीद्वाक्यंविनयेनमहायशाः ॥ २३ ॥ अहोदासोस्मितेधीरकोपंमयितुमाकृथाः॥
अकारणस्यहासस्य कारणंवच्मिसाम्प्रतम् ॥ २४ ॥ भवानहंचसीताचगङ्गातीरमुपाश्रिताः ॥ इंगु
दीतरुमूलेतुस्थितानांसाचशर्वरी ॥ २५ ॥ मयाविरचितांशय्यांप्राप्यत्वंसीतयासह ॥ सुप्तोसितत्र-
युवयोर्गुहेनसहपालने ॥ २६ ॥ स्थितोस्मिसशरोधीरह्यर्धरात्रेसमाविशत् ॥ निद्रामामाप्यहंतावद्विह-
सन्वीक्ष्यचाब्रुवम् ॥ २७ ॥ निद्रेत्वंयाहिवर्षाणिपत्न्यांमेनवपञ्चभो ॥ मदागमनपर्य्यन्तमुर्मिलायांतु २५
त्वंवस ॥ २८ ॥ इत्युक्तासामयानिद्रा ह्युर्मिलामवसत्पुरा ॥ चतुर्दशसमाराम निद्रामेनास्ति-
कानने ॥ २९ ॥ आहारोवापिमेनास्ति मयात्वेवंसमाश्रितम् ॥ सानिद्रामामनुप्राप्ता कृतोहासो

मथाधुना ॥ ३० ॥ एवंब्रुवतिसौमित्रौ सभार्याराघवस्यच ॥ लक्ष्मणस्यवचःश्रुत्वा जाम्बवानिद
मब्रवीत् ॥ ३१ ॥ रामराघवराजेन्द्र क्रोधंमाकुरुलक्ष्मणे ॥ रावणिःसुतपस्तप्त्वाबरदंत्रिविधिमब्रवीत्
॥ ३२ ॥ तपसाममतुष्टश्चेद्देहिमेबध्यतांप्रभो ॥ निशम्यवचनंब्रह्मामेघनादमथाब्रवीत् ॥ ३३ ॥
नैतत्सिध्यतितेपुत्रवरमन्यंददामिते ॥ यामायाःसंतिलोकेषुत्वयितिष्ठन्तुताःसदा ॥ ३४ ॥ मेघ
मण्डलमध्यस्थः करिष्यतिभवान्रणम् ॥ अग्नेःशताङ्गोनिर्यातु तंखेसारथिसंयुतं ॥ ३५ ॥ आरु-
ह्यत्वंरिपूणांवैह्यदृश्योविजयीभवेः ॥ यदान्तरायोजायेततदानाशोभविष्यति ॥ ३६ ॥ चतुर्दशहि
वर्षाणिनिद्राहारविवर्जितः ॥ रामस्यावरजोयस्यतेनमृत्युर्भवेत्तव ॥ ३७ ॥ इत्युक्त्वासहितोदेवैस्त
त्रैवान्तरधीयत ॥ तदाप्रभृतिलोकेषुदुर्जयोदेवदानवैः ॥ ३८ ॥ अदृश्यःसन्विनिर्जित्यपाकारिंरणं
मूर्धनि ॥ भ्रात्रासौमित्रिणासंख्येलङ्कायांनिहतःकिल ॥ ३९ ॥ अभवत्खलुसौमित्रिर्निद्राहारवि
वर्जितः ॥ चतुर्दशहिवर्षाणिवनवासेतवानघ ॥ ४० ॥ हासस्यकारणंचैतत् क्रोधंमाकुरुलक्ष्मणे ॥
इतिजाम्बवतोवाक्यं श्रुत्वारामःसविस्मयः ॥ ४१ ॥ ससमालिंग्यसौमित्रिंमुदावाक्यमभाषत ॥
इदंमयानविदितंखलुऋक्षेश्वरोवदत् ॥ ४२ ॥ वनवासेजागरणंनिद्राहारविवर्जितः ॥ निद्रांप्राप्नुहि २५
याहित्वंसौमित्रेमत्पुरंविश ॥ ४३ ॥ इत्युक्त्वाराघवःप्राह शत्रुघ्नंभरतानुजं ॥ एहिशत्रुघ्नसौमित्रिं
प्रवेशयगृहोत्तमं ॥ ४४ ॥ रामस्यैवंवचःश्रुत्वाशत्रुघ्नेनसमन्वितः ॥ पादौस्पृष्ट्वाथसौमित्रिर्जगाम

प्रीतमानसः ॥ ४५ ॥ ततः संमंत्र्यरामेणप्रविश्यान्तःपुरंतदा ॥ शत्रुघ्नकल्पितांशय्यामवाप्यरघु-
नन्दनः ॥ ४६ ॥ निद्रांकृत्वामहातेजालक्ष्मणःपुनरुत्थितः ॥ स्नात्वाकृत्वाह्निकंकर्मरामान्तिकमु
पाययौ ॥ ४७ ॥ इति श्री वाशिष्टेरामायणे उत्तरकाण्डे भोजनलक्ष्मण निद्राख्यानंनाम दशमो-
ध्यायः ॥ १० ॥ शतानन्दउवाच ॥ शतानन्दोमहातेजावशिष्ठंसत्यवादिनं ॥ अपृच्छद्रामचरितं
सीताविजयसंज्ञकम् ॥ १ ॥ वशिष्ठउवाच ॥ शतास्योनामदनुजः सीतयानिहतःपुरा ॥ वक्ष्येहं
शृणुभद्रंतेतदाख्यानंमहामुने ॥ २ ॥ रावणस्यचवृत्तान्तंकुम्भजान्मुनिसत्तमात् ॥ रामःश्रुत्वाप्रहृष्टो
भून्मुनिभिर्भ्रातृभिःसह ॥ ३ ॥ अवोचद्राममुद्वीक्ष्यनभोवाणीमहाद्भुतम् ॥ प्रहृष्टाचास्मिभोराम
दशास्यवधमात्रतः ॥ ४ ॥ शतास्योनामदनुजःसर्वलोकभयङ्करः ॥ शाकद्वीपान्तरेरम्येदधिसागर
वेष्टिते ॥ ५ ॥ मायापुरमितिख्यातंस्वर्णप्राकारसंयुतं ॥ तस्मिनपुरेव्यापिवसन्भातियुष्मजिगीषया
॥ ६ ॥ रामस्तुवचनंश्रुत्वाविस्मयाकुलमानसः ॥ पृष्टवान्कुंभसंभूतं वार्त्ताशतमुखस्यच ॥ ७ ॥
अगस्त्यउवाच ॥ शृणुराघववक्ष्यामि शतास्यास्यकथामिह ॥ कश्यपस्यदनुर्भार्य्या तत्तनूजःशताननः
॥ ८ ॥ तेनघोरेणतपसानन्दितश्चतुराननः ॥ प्रसन्नचेतसस्तस्मात् जग्राहविविधान्वरान् ॥ ९ ॥ 
अभूत्तस्यवपुर्नूनं सहस्रशतयोजनं ॥ योजनानांसहस्रंच पटुत्वंवपुषोभवत् ॥ १० ॥ तारातस्य-
शिरोभागे पुष्पमालाइवस्थिताः ॥ वन्दीकृतेन्द्रवरुणो मण्डलाकृतिकुण्डलः ॥ ११ ॥ सराक्षसः-

वा०रा० पूजयित्वा काशीपत्तनवासिनं ॥ अजरत्वममर्त्यत्वं प्रपेदेतद्गुरोत्तमं ॥ १२ ॥ त्वयालोक-
हितार्थाय कर्तव्यंतद्विनाशनम् ॥ तस्यतद्वचनंश्रुत्वा चिंतयामासराघवः ॥ १३ ॥ श्रीरामउवाच ॥
मुनेकेनप्रकारेण वध्योमेराक्षसेश्वरः ॥ वदतत्वंहिनिश्चित्य करिष्येतत्प्रयोजनं ॥ १४ ॥ रामराघव
॥२७॥ राजेन्द्र तवामोघाःपतत्रिणः ॥ नासाध्यंकुत्रयत्किंचि त्कुरुतस्यनिवर्हणं ॥ १५ ॥ श्रीरामउवाच ॥
तथैवाहंकरिष्यामि मुनीशतवशासनात् ॥ शतास्यनिग्रहंसत्यं गोब्राह्मणहितायच ॥ १६ ॥
इतितंमुनिमामन्त्र्य रामोभ्रातॄनथाब्रवीत् ॥ श्रृण्वन्तुभ्रातरस्सर्वे मद्वाक्यंधर्मसंहितं ॥ १७ ॥
अहंरावणसङ्ग्रामे श्रान्तोस्मिसहलक्ष्मणः ॥ लवणासुरसंहारे शत्रुघ्नोपिश्रमान्वितः ॥ १८ ॥
भरतस्यतुगांधर्वे संहारेहिश्रमोभवत् ॥ कोस्यशक्तोवधेकृत्वा वहुसागरलंघनं ॥ १९ ॥ इत्युक्त्वा-
परितोवीक्ष्य हनूमंतमथाब्रवीत् ॥ आंजनेयभवच्छौर्य्यं त्रिषुलोकेषुविश्रुतं ॥ २० ॥ नास्ति-
किंचित्वयासाध्यं त्रैलोक्येसचराचरे ॥ कर्तव्यंमेत्वयावीर दानवस्यनिवर्हणम् ॥ २१ ॥
रामस्यवचनंश्रुत्वा हनूमान्रुद्रसम्भवः ॥ वचःसंगृह्यशिरसा मधुराक्षरमब्रवीत् ॥ २२ ॥ श्री
हनुमानुवाच ॥ मदीयस्कन्धमारुह्य सानुजःसपरिच्छदः ॥ जहिशत्रुंमहावीर शाकद्वीपनिवा- २७
सिनम् ॥ २३ ॥ एवमुक्तोहनुमता रामःसंतुष्टमानसः ॥ एतस्मिन्नन्तरेसीता रामंवचनमब्रवीत् ॥
२४ ॥ द्रष्टुमिच्छामियोद्धारं रणेत्वांसहराक्षसैः ॥ मयानदृष्टःसंग्रामो रावणस्यपुरानघ ॥ २५ ॥

वैदेहीवचनंश्रुत्वा अंतरङ्गेविचार्य्यसः ॥ अङ्गीचकाररामोपि जानक्यागमनंतदा ॥२६॥ तन्मारुति-
वचःश्रुत्वा समालिंग्यकपीश्वरम् ॥ समारुह्यससैन्योसौ सानुजःसहसीतया ॥ २७ ॥ प्रयाणा-
 भिमुखोभूत्वा सजगामविहायसा ॥ तेनरामेणययतुः सूर्य्यात्मजविभीषणौ ॥ २८ ॥ रक्षसां-
 कोटयःपञ्च बानराबलवत्तराः ॥ सर्वेप्यनुययुस्तंतु बलिनोयुद्धकांक्षिणः ॥२९॥ नानाविधायुधोपेता
वायुवेगसमन्विताः ॥ लवणेक्षुसुरासर्पिः पारावारान्यथाक्रमं ॥ ३० ॥ जम्बूप्लक्षकुशक्रौंच
द्वीपाँतीर्त्वासकाननान् ॥ कोटीनांसप्तसाहस्रं पञ्चपञ्चाशतांतदा ॥ ३१ ॥ लक्षाणांयोजनानां-
च द्वादशैवंयथाक्रमं ॥ शाकद्वीपोत्तराशायां दधिसिंधुसमावृतम् ॥ ३२ ॥ मायापत्तनमासाद्य
शतवक्रेणपालितं ॥ वाजिवारणसम्पूर्णं रथयूथैःसमान्वितं ॥ ३३ ॥ श्वेताभ्रचयसंकाशैः प्रासादैः-
श्चमनोहरम् ॥ पुष्पमालावितानाढ्यं पताकाध्वजशोभितं ॥ ३४ ॥ सुवर्णकलशोपेतैःपुरद्वारैरलङ्-
कृतं ॥ नानावस्त्रसमाकीर्णसप्तप्रकारशोभितम् ॥ ३५ ॥ दुर्गत्रितयसंयुक्तंदुर्गमंदेवदानवैः ॥ रामः
पश्यन्पुरंरम्यं तदाहर्षमवापसः ॥ ३६ ॥ राघवस्तत्पुरोपान्तेकाञ्चनद्रुमशोभिते ॥ नन्दनाभंमहो-
द्यानंसंविवेशमनोहरम् ॥ ३७ ॥ तस्मिन्वनेरामसैन्यंप्राविशत्ततसराक्षसं ॥ चक्रुःकोलाहलंसर्वेराम 
वाक्यप्रणोदिताः ॥ ३८ ॥ राक्षसःसुमहाघोरोयुक्तस्तत्पुररक्षकः ॥ कालकेयःसतान्वीक्ष्ययोद्धुंसमु-
पचक्रमे ॥ ३९ ॥ अथरामाज्ञयाचक्रुः पुरीबाधांप्लवंगमाः ॥ तेचारंकालकेयाद्याः युद्धकर्मपराय-

णाः ॥४०॥ रथहस्तिहयारूढ़ाःराक्षसाःपुररक्षकाः ॥ शस्त्रास्त्रपाणयःसर्वेसाट्टहासास्तदाययुः ॥४१॥
परिवेष्ट्यबलंसर्वंवानराणांचरक्षसां ॥ वानराराक्षसान्जघ्नुःशाखिपर्वतराजिभिः ॥ ४२ ॥ तद्दैत्य-
सैन्यकालापैर्वीरबानरतर्जनैः ॥ विभीषणचमूनादैःसर्वेलोकाश्चकम्पिरे ॥ ४३ ॥ समुद्राःक्षुभितास्
सर्वेवेपमानाचमेदिनी ॥ सूर्य्यचन्द्रसमावास्तांगगनंसघनंतदा ॥ ४४ ॥ शतास्यवाहिनीघोराराम
सैन्येनसर्वदा ॥ मासद्वयंमहायुद्धंचक्रेन्योन्यजिगीषया ॥ ४५ ॥ तस्मिन्कालेयुद्धवार्तांश्रुत्वाशतमु-
खोसुरः ॥ विसृज्यशङ्करध्यानंमौनीलोकभयंकरः ॥४६॥ आत्मानंवीक्ष्यहस्तेषुधृत्वाचापायुधानिसः ॥
निर्ययौस्वपुरात्तस्मात्जगज्जांवर्तकोपमः ॥ ४७ ॥ शताननंसमुद्वीक्ष्यरामोविस्मयमागतः ॥ असौन
दृष्टपूर्वोहिकथंवध्योमयाभवेत् ॥ ४८ ॥ शतग्रीवोमहावीर्योब्रह्मादिसुरपूजितः ॥ इत्यालोच्यमहावीरं
हनूमंतमलोकयत् ॥४९॥ इतिचिंताकुलंरामंमारुतिःप्रसमीक्ष्यसः ॥ जगादविस्मयाविष्टंपरमात्मानम-
व्ययम् ॥५०॥ श्री हनुमानुवाच ॥ त्यजाचिन्तांमहावाहोकुरुदानवमर्द्दनम् ॥ मदीयदेहेस्थित्वात्वंदानवं
हंतुमर्हसि ॥ ५१ ॥ इत्युक्त्वाराममारोप्यनिजदेहंसमारुतिः ॥ तारकाक्रान्तरोमालिःखेचरःसंव-
भौमहान् ॥५२॥ संसक्तग्रहनक्षत्रातस्यवालसमुन्नतिः ॥ ब्रह्माण्डकूटसंभिन्नरामद्रावितराक्षसा ॥५३॥ 
इति श्री वाशिष्ठेरामायणे उत्तरकाण्डे सीताविजये एकादशोध्यायः ॥ ११ ॥ श्री वशिष्ठउवाच ॥
दिग्विदिक्षुसमुद्दण्डशुण्डाकारभुजद्वयम् ॥ दंष्ट्राकरालबदनंनृसिंहमिवसंस्थितं ॥ १ ॥ तारकाक्रान्त

हृदयंताराहारैश्चशोभितम् ॥ वीरंरामाधिकाकारंहनूमंतमथोत्थितम् ॥ २ ॥ कालानलशतद्योतंतं
ददर्शशताननः ॥ सोपिदृष्ट्वामहावीरंसिंहनादोन्मुखस्थितम् ॥ ३ ॥ पीड़यामासहनूमान्शतास्यं
मुष्टिमर्द्दनैः ॥ मुहूर्तमात्रयुद्धेनतेनमूर्छामवापसः ॥ ४ ॥ ज्ञात्वाबलंसुरारातिस्तुल्वावायुतनूद्भवम् ॥
तदाहवबृहच्छूलंविससर्जसराक्षसः ॥ ५ ॥ भग्नःशूलोहनुमतावज्राभकठिनेनसः ॥ वासुदेवायशा-
न्तायरामायाक्लिष्टकर्मणे ॥ ६ ॥ प्रद्युम्नायरिपुघ्नायभरतायैकधन्विने ॥ संकर्षणायरुद्रायलक्ष्मणाय
महात्मने ॥ ७ ॥ अनिरुद्धायनित्याय शत्रुघ्नायनमोनमः ॥ इतिध्यात्वारामभक्त्या विजयंप्राप
पावनिः ॥ ८ ॥ अनेनस्तवराजेन शत्रुनाशोभवेन्नृणाम् ॥ अथरामोहनूमंतं दृष्ट्वासंप्रमुमोदह ॥
९ ॥ वशिष्ठउवाच ॥ सर्वत्रमण्डलमतीत्यपरंवपुस्त च्चक्रेप्रमोदरभसंरघुपुङ्गवस्य ॥ दृष्ट्वाशतास्य
वदनानिरघूत्तमोपि जग्राहलक्ष्मणकरस्थमधिज्यचापम् ॥ १० ॥ राक्षसस्तस्यवदनं वीक्ष्यरामस्य
धीमतः ॥ कृताट्टहासैर्वदनै र्ज्वलज्ज्वालानलोपमैः ॥ ११ ॥ गर्ज्जनंतर्ज्जनंकृत्वा संहारायप्रचक्रमे ॥
इतितौभीषणाकारौ मृगेन्द्राविवहस्तिनौ ॥ १२ ॥ मेरुमन्दरनामानौ पर्वताविवदुष्करौ ॥ एत-
स्मिन्नन्तरेवीरौ पुरीमासाद्यसर्वतः ॥ १३ ॥ विभीषणश्चसुग्रीवः पीड़यामासतुर्भृशं ॥ शस्त्रास्त्रशैल
पाषाण पादपानांप्रवर्षणैः ॥ १४ ॥ तंदृष्ट्वाराक्षसःक्रूरस्तेनयुद्धंचकारसः ॥ सोपिपादप्रहारेण
चिक्षेपासुरवानरान् ॥ १५ ॥ लङ्काद्वीपेनिपतितौ सुग्रीवश्चविभीषणः ॥ स्वस्वस्थानेषुपातिताः

व०रा० वानराराक्षसास्तदा ॥१६॥ गोलांगूलाश्चऋक्षाश्च राजानोयेसमागताः ॥ भरतोलक्ष्मणश्चैव येचान्ये
॥३१॥ स्वगृहंययुः ॥ १७ ॥ एवंस्ववलमालोक्य चिन्तयामासराघवः ॥ सीतारामावाञ्जनेयस्त्रयस्तत्रव्यव-
स्थिताः ॥१८॥ सीतारामौचिन्तयाना वालोक्यात्रमहाबलः ॥ आंजनेयस्तदातेषां पुनरागमनायसः
॥१९॥ बवन्धसागरान्सर्वान् हनूमान्बालसेतुना ॥ तन्मार्गेणैवसुग्रीवः समायातोविभीषणः ॥२०॥
भरतोलक्ष्मणश्चैव शत्रुघ्नश्चसमान्विताः ॥ दिव्यास्त्रशस्त्रैःसंग्रामं कृत्वामासचतुष्टयम् ॥ २१ ॥ परि-
श्रमपरास्तत्र स्वयमेवविमोहिताः ॥ दृष्ट्वातान्सोदरान्सर्वान् हनूमन्तंमहाबलं ॥२२॥ रामःसस्मार
कौवेरं पुष्पकंरत्नभूषितं ॥ पुष्पकेतत्समारुह्य जानकीसहितस्तदा ॥ २३ ॥ कोटिसूर्य्याग्निसंका
शस्तारकब्रह्मसंज्ञकः ॥ वानराणांचमूस्तत्र राक्षसानांचभूभुजां ॥ २४ ॥ शतास्यदर्शनेनैव मोहिताः
पतिताभुवि ॥ बिभेदरामस्तीक्ष्णाग्रै शस्त्रैश्चधनुषच्युतैः ॥ २५ ॥ रक्तप्रवाहैःसंभूतं शतास्यशतकं
वभौ ॥ एवंतयोर्महद्युद्धमभवद्विस्मयाकरम् ॥ २६ ॥ ब्रह्माण्डेषुचसर्वेषु शतवक्त्रमयंजगत् ॥
शताननसहस्रैस्तैर्युद्धंचक्रेरघूत्तमः ॥ २७ ॥ ब्रह्मनारायणास्त्राद्यैर्दिव्यास्त्रैर्विविधैरपि ॥ तस्यतीक्ष्णै-
र्दिव्यशरैः रामास्त्रैर्विमुखीकृताः ॥ २८ ॥ परस्परशरोद्भिन्न देहनिस्सृतशोणितौ ॥ राघवःशतवक्त्र- ३१
स्तावभूतांकिंशुकप्रभौ ॥ २९ ॥ एवंकृतंशतास्येन षण्मासंकदनंमहत् ॥ आलोकयद्धनूमंतं
रामोवायुतनूद्भवम् ॥ ३० ॥ तद्रहस्यंतदाज्ञात्वा हनूमान्मारुतात्मजः ॥ हत्वाशंखसहस्राणि

शतास्यानांरणेतदा ॥ ३१ ॥ चकाशेकपिबर्ग्योपि बज्राभपदघट्टनैः ॥ हनुमद्बलमाश्रित्य सर्व-
वानरयूथपाः ॥ ३२ ॥ विभीषणादयःसर्वे क्षेमंयान्तिरणाजिरे ॥ भरतोलक्ष्मणश्चैव शत्रुघ्नश्च-
गतश्रमाः ॥ ३३ ॥ हनूमांश्चविमानाग्रे चित्रिताइवसंस्थिताः ॥ वीक्ष्यतत्समरंघोरं राघवासुर-
वीरयोः ॥ ३४ ॥ देवामहर्षयःसर्वे विस्मयंपरमंगताः ॥ रामःशताननंवीक्ष्य सुराहितपराक्रमं ॥
॥ ३५ ॥ स्तुत्वामुहुर्मुहुर्वीरं परिश्रान्तइवस्थितः ॥ रामंदृष्ट्वातदाश्रान्त मतिविस्मयमानस ॥
३६ ॥ वीरपत्नीतदाप्राह पतिंराजीवलोचनं ॥ करोम्यनेनभोयुद्धं शतास्येनह्यहंप्रभो ॥ ३७ ॥
जानकीवचनंश्रुत्वा रामोज्ञानवताम्वरः ॥ स्मृत्वास्मृत्वाभववीरं रक्तवीजंशताननं ॥ ३८ ॥
ज्ञात्व तांशक्तिरूपांच सीतांलोकैकवन्दितां ॥ इतिविज्ञायमनसा स्त्रीबध्योसौशताननः ॥ ३९ ॥
सीतामाहूयरामोपि तस्यांनिक्षिप्यस्वांशकं ॥ ददौरथीरथंदिव्यं सीतायैकार्मुकंशरं ॥ ४० ॥
सागृहीत्वाविभोश्चापं तूणावक्षयसायकौ ॥ रामस्यपुरतःस्थित्वा जायालक्ष्मीरिवाबभौ ॥ ४१ ॥
सरामःपरमोदारः सुमुखःसुमहायशाः ॥ ज्ञात्वातुहृदयंतस्या मधुरंवाक्यमब्रवीत् ॥ ४२ ॥ ज्ञात्वा-
वधंहिदैत्यस्य कुरुयुद्धंवरानने ॥ ऐकान्तिकंवचःश्रुत्वा वीरपत्नीधरासुता ॥ ४३ ॥ युद्धंचक्रे- 
महाघोरं शतास्येनमहाद्भुतम् ॥ सीताशतास्यविशिखै नीरन्ध्रमभवन्नभः ॥ ४४ ॥ उत्पातश्चमहो-
त्पातो रक्तवर्षमभूत्तदा ॥ शतास्यशरसंविद्धा सीताभूपतिताभवत् ॥ ४५ ॥ मुहूर्तमात्रंसास्थित्वा

वभूवपुनरुत्थिता ॥ संज्ञामवाप्यवैदेही रोषयुक्तातदाभवत ॥ ४६ ॥ विश्वरूपामहाकाली
महिषासुरमर्द्दिनी ॥ शताननवधोद्युक्ता ह्यासीद्रक्तासुरान्तका ॥ ४७ ॥ जिह्वांप्रसार्य्यभूमौसा
पीत्वातद्रुधिरंवहु ॥ देवदानवगंधर्व सिद्धानांभयदायिनी ॥ ४८ ॥ पतिंध्यात्वामलमतिं रामं-
राजीवलोचनं ॥ रावणासुरसंहारं कुम्भकर्णांतकंविभुं ॥ ४९ ॥ देवदानवदुर्धर्षं जगद्भयदभी-
षणं ॥ अनन्तायुधदोर्दण्ड मृत्युमृत्युंजगत्प्रभुं ॥ ५० ॥ ब्रह्मास्त्रमपिसंधाय सीताधनुषिसत्वरम् ॥
अहंसीतेतिविख्याता पतिसेवापरायणा ॥ ५१ ॥ रामोपिसत्यसन्धश्च यदिस्याद्भुवनत्रये ॥
शताननोपिदैत्येन्द्रो ह्यनेनैवसहन्यताम् ॥ ५२ ॥ इतिप्रतिज्ञापूर्वंसा विसृज्यामोघसायकं ॥ तदा-
नृपपुरोभागे कालरात्रिरिवावभौ ॥ ५३ ॥ शताननोपिदिव्यास्त्रै वारयामाससायकम् ॥ ब्रह्मास्त्र-
मपिचोत्सृष्टं वैदेह्यारामसन्निधौ ॥ ५४ ॥ कृत्वासर्वाणिशस्त्राणि प्राविशत्तस्यवक्षसि ॥
सहस्रादित्यतुल्येतु तत्क्षणेराक्षसप्रभुः ॥ ५५ ॥ रणेचनिहतश्चासीद्वज्रेणकुधरोयथा ॥ कुंभकर्ण-
निपातेन लवणाम्बुनिधिर्यथा ॥ ५६ ॥ तथातस्यनिपातेन घूर्णितोदधिसागरः ॥ ववर्षुः
पुष्पवर्षाणि देवादिव्याङ्गनायुताः ॥ ५७ ॥ सीताग्रेरामचन्द्राग्रे प्रणम्यस्तुतिपूर्वकम् ॥ हनुमदग्रे- 
पितदा तुष्टाःसर्वेजगज्जनाः ॥ ५८ ॥ देवीददौलक्ष्मणाय रामदेवस्यशासनात् ॥ स्मितवक्त्रोनुज-
श्चापं तूणीचाक्षयसायकौ ॥ ५९ ॥ वानराराक्षसास्तेन विजयेनप्रहर्षिताः ॥ मायापुरेनीलकेतु

मभिषिच्यतदात्मजम् ॥ ६० ॥ रामःप्रसन्नवदनः सीतायैरत्नशोभितम् ॥ निजहारंददौतस्यै
साप्रोवाचनिजेश्वरम् ॥ ६१ ॥ एतस्याभरणस्यार्हः पावनिःपवर्तोपमः ॥ भवानेकोमहावीरः
परमाद्भुतविक्रमः ॥ ६२ ॥ एकोवीरःपावनिस्त्वं भवतःस्वप्रभावतः ॥ अनेननिहताःसर्वे
शतास्याःपर्वतोपमाः ॥ ६३ ॥ मायासुरोहतस्त्वेक स्त्वत्प्रसादान्मयाप्रभो ॥ प्रयासोभ्यधिकोघोर
एतत्कपिवरस्यतु ॥ ६४ ॥ एतज्जयनिधानंनो हनुमच्छौर्य्यमेवहि ॥ इत्युक्त्वातदनुज्ञाता ददौहार-
मनुत्तमम् ॥ ६५ ॥ जानकीकृपयायुक्तं श्रीयुक्तंवायुसूनवे ॥ रामोपिपरमोदारस्तस्मै ब्रह्मत्वमव्य-
यम् ॥ ६६ ॥ भाविब्रह्मपदंतातभवान्स्था स्यतिनिश्चयः ॥ अयंहारःपुरादत्तो ब्रह्मणाविष्णुनासह
॥ ६७ ॥ इक्ष्वाकवेविरञ्चेन दत्तश्चकृपयाततः ॥ पट्टाभिषेकसमये साकेतनगरेवरे ॥ ६८ ॥
तद्वंशसम्भवानान्तु धार्य्यमेतद्विभूषणं ॥ मदीयवंशजैःपूर्वैर भिषिक्तैश्चसर्वशः ॥ ६९ ॥ धारितं-
भूषणंह्येत दष्टोत्तरशतान्वितं ॥ भवताधार्य्यमेतत्तु भवान्ब्रह्मेशपावनः ॥ ७० ॥ इत्युक्त्वाभगवा-
न्वीरः सर्वभूतमनोहरम् ॥ ददौहनुमतेहारं सूर्य्यविम्बसमप्रभम् ॥७१॥ धृत्वाहारंपवनज स्तारागण-
समन्वितः ॥ कपिवीरसमायुक्तः सुमेरुरिवसोबभौ ॥ ७२ ॥ इतिश्रीवाशिष्ठे रामायणे उत्तरचरित्रे
सीताविजयोनाम द्वादशोध्यायः ॥ १२ ॥ वशिष्टउवाच ॥ सीतासमेतंतंरामं हनुमद्वाक्यकोविदम् ॥
शतास्यविजयोदीर्णं देवाब्रह्मपुरोगमाः ॥ १ ॥ नमस्कृत्यययुःसर्वे पुराणंपुरुषंविभुं ॥ सानुजः-

सचह्यूर्वीशः सीतयासहितस्तदा ॥ २ ॥ सुधावृष्ट्यामृताशेषाः स्वान्स्वान्प्राणान्प्रपेदिरे ॥
तत्पुष्पकंतुकौवेरं प्रेषयित्वारघूद्वहः ॥ ३ ॥ हनुमद्वाहनोभूत्वा तीर्त्वातान्सागरान्पुनः ॥
तद्वीपानिचरम्याणि तथैवोत्तरकोशलान् ॥ ४ ॥ रत्नसानुंसुरावासं गत्वातत्रसुरेश्वरः ॥
संपूजितंसुकैलासं प्रपेदेशंकरालयं ॥ ५ ॥ समागतंमहात्मानं रामंसौमित्रिवत्सलं ॥ पार्वत्या-
सहसर्वेशः शंकरःप्रमथाधिपः ॥ ६ ॥ संदर्शयित्वात्मविभुं तारकब्रह्मसंज्ञितम् ॥ प्रार्थयामासका-
कुत्स्थं सग्रहागमनायसः ॥ ७ ॥ अवतीर्य्यहनूमंत मवलम्ब्यचतत्करम् ॥ सुग्रीवादत्तमाणिक्य
पादुकाद्वितयेतदा ॥ ८ ॥ पादौनिक्षिप्यकृपया सीतयासहसोदरः ॥ विभीषणेनरक्षोभि र्वानरै-
स्तद्गृहंययौ ॥ ९ ॥ रत्नसिंहासनासीनं जानकीसहितंविभुं ॥ षोडशैरुपसंचारैः पूजयामासभक्तितः
॥ १० ॥ पुनःपुनःप्रणम्याथ पादतीर्थंमनोहरं ॥ रामदेवस्यसशिवः शम्भुःपुण्यमधारयत् ॥ ११ ॥
प्रदक्षिणांनमस्कारं कृत्वातस्यपुनःपुनः ॥ तुष्टावदेवेदेवेशं पूर्वोक्तंचारुरूपिणं ॥ १२ ॥ रामः
साक्षात्परब्रह्म परमात्मापरात्परः ॥ प्रसन्नहृदयोभूत्वा पूजितस्तेनशंभुना ॥ १३ ॥ ददौतस्मैहनु-
मते शंभवेलक्ष्मणायच ॥ भरतायरिपुघ्नाय पार्वत्यैसीतयासह ॥ १४ ॥ विभीषणाद्यर्कजाय विश्व-
रूपप्रदर्शनम् ॥ स्वस्ययोगिवराणांच देवतानांचदुर्लभम् ॥ १५ ॥ तद्दिव्यरूपंसर्वत्र पर्वताश्चशिला
द्रुमाः ॥ व्योमादीन्यतुलादीनि भुवनानिचतुर्दश ॥ १६ ॥ आदित्यावसवोरुद्रा स्तार्क्ष्यानंतादिवो-

करः ॥ वेदादिविद्याःपरमाः पंचरात्रादिकागमाः ॥ १७ ॥ अस्मदाद्याः सप्तर्षयः पशवोऽश्वाश्वरा-
क्षसाः ॥ गन्धर्वयक्षसिद्धाद्याः विष्णोःसर्वेचतारकाः ॥ १८ ॥ यच्चभूतंभविष्यंच पर्वतपश्चभौतिकं ॥
तत्सर्वंतत्क्षणेनैव प्रत्यक्षंसमपश्यत ॥ १९ ॥ रामंश्याममंमहात्मानं सच्चिदानन्दविग्रहम् ॥ निमग्नाः
परमानन्द सागरेतत्परायणाः ॥ २० ॥ प्रशशंसुस्तदारामं सर्वेहनुमदादयः ॥ देवर्षयोनारदाद्या
स्सनकाद्यामहर्षयः ॥ २१ ॥ श्री हनुमानुवाच ॥ नमस्तेदेवदेवेश महापुरुषपूर्वज ॥ रामराघवस-
र्वज्ञ सीतानायकमेप्रभो ॥ २२ ॥ अक्षीणबाणतूणीर समारोपितकार्मुक ॥ करेविभक्तैकशरः
श्रीरामःशरणंमम ॥ लक्ष्मण उवाच ॥ अहंज्येष्ठइतिज्ञात्वा मोहितस्त्वत्प्रभावतः ॥ त्वत्प्रसादात्
कृतार्थोस्मिरक्षरक्षमहाप्रभो ॥ २४ ॥ शंकरउवाच ॥ रामायरामभद्राय रामचन्द्रायवेधसे ॥ रघु-
नाथायनाथाय सीतायाःपतयेनमः ॥ २५ ॥ पार्वत्युवाच ॥ दक्षिणेलक्ष्मणोयस्य वामेचजनकात्म-
जा ॥ पुरतोमारुतिर्यस्य तम्बन्देरघुनन्दनम् ॥ २६ ॥ भरतउवाच ॥ नीलोत्पलदलश्यामः पुण्डरी
कनिभेक्षणः ॥ धृतकोदण्डतूणीरो सदाभवगतिर्मम ॥ २७ ॥ शत्रुघ्नउवाच ॥ राममिन्दीवरश्यामं
राजीवायतलोचनं ॥ ज्याघोषानिर्जितारातिं जानकीरमणंभजे ॥ २८ ॥ सुग्रीवादिमहाभक्ताः
स्तुत्वासर्वेश्वरप्रभुं ॥ विभीषणश्चमुनयः सर्वेतेशरणंययुः ॥ २९ ॥ कृपयादेवदेवोपि निरीक्ष्यहनु-
मन्मुखम् ॥ तत्रसौम्यवपुर्भूत्वा दत्वातेषांमनोरथान् ॥ ३१ ॥ अथचैत्ररथेरामो सौगंधिकमनोहरैः ॥

विहारान्विविधान्कृत्वा तद्वस्तुनिचयानपि ॥ ३२ ॥ गृहीत्वाराजराजोहि पूजनंतत्सरोवरे ॥ निर्वृ-
त्यशङ्करंगौरीं सीतयासहितस्तदा ॥ ३३ ॥ तमारुह्यकपिश्रेष्ठं सानुजःसपरिच्छदः ॥ पर्वतान्वहु-
लान्देशान्नदीस्तीर्त्वावहूदकाः ॥ ३४ ॥ वाराणसींसमासाद्य स्नात्वागङ्गानदीजले ॥ निर्वृत्यकृत्यं
गंगायां दृष्ट्वाविश्वेश्वरंशिवम् ॥ ३५ ॥ ददर्शरामोविघ्नेशं ढुंढिराजंदयानिधिं ॥ पितृभ्यःपिण्ड
दानंचदत्वा रामोयथाविधि ॥ ३६ ॥ गयायांपिण्डदानेन स्वपितॄनप्यतर्प्पयत् ॥ एवंकृत्वाविधा-
नेन सानुजःसहसीतया ॥ ३७ ॥ तमारुह्यकपिश्रेष्ठं मारुतप्रियनन्दनम् ॥ शोभनालंकृतंपुण्यं
वितानध्वजशोभितं ॥ ३८ ॥ कैलासशिखराकारं सौधपंक्तिविराजितम् ॥ वाद्यघोषसमायुक्तं
साकेतनगरंययौ ॥ ३९ ॥ नृपालसंघैरसुरैःप्लवंगमैः सहोदरैर्मंत्रिवरूथिनीवरैः ॥ युक्तोविदेहात्म
जयारघूत्तमः साकेतपुर्य्यांप्रमुमोदविज्वरः ॥ ४० ॥ इति श्री वाशिष्ठे रामायणे उत्तरचरित्रे सीता
विजयोनाम त्रयोदशोध्यायः ॥ १३ ॥ श्रीसूत उवाच ॥ कैलाशशिखरेरम्ये कल्पवृक्षोपशोभिते ॥
गन्धर्वगणसम्पूर्णे राजतैःशिखरैर्युते ॥ १ ॥ विद्याधरैरप्सरोभिः प्रमथैश्चविराजिते ॥ रत्न-
सन्नद्धपीठेषु समासीनंतुशंकरम् ॥ २ ॥ दृष्ट्वासापार्वतीप्राह वचनंधर्मसंहितम् ॥ 
श्रीपार्वत्युवाच ॥ भगवन्सर्वधर्मज्ञ रामस्यचरितंशुभम् ॥ ३ ॥ श्रीरामविजयंनाम ब्रूहि-
मेकरुणाकर ॥ तस्यास्तद्वचनंश्रुत्वा पार्वतींप्राहशंकरः ॥ ४ ॥ श्रीईश्वर उवाच ॥

श्रृणुदेविप्रवक्ष्यामि प्रीतयेगिरिकन्यके ॥ श्रीरामविजयंनाम सहस्त्रग्रीवनाशनम् ॥ ५ ॥ सर्वपाप-
प्रशमनं सर्वसौभाग्यदायकम् ॥ पुत्रपौत्रप्रदंनॄणां चतुर्वर्गफलप्रदं ॥ ६ ॥ रामोदाशरथिः
श्रीमानयोध्यायामभून्नृपः ॥ इक्ष्वाकुवंशसंभूतः सर्वराक्षसमर्द्दनः ॥ ७ ॥ कुम्भकर्णमहाकाय
दशास्येन्द्रजितांवधं ॥ कृत्वाह्ययोध्यांसंप्राप्तः सीतयाभ्रातृभिर्युतः ॥ ८ ॥ यदाभिषिक्तोराजन्यैर्वि
शिष्टाद्यैर्महात्मभिः ॥ भ्रातृभिःसहितोरामः सम्यग्राज्यमपालयत् ॥ ९ ॥ एवंबहुतिथेतीते
रामोराजीवलोचनः ॥ हयमेधंततःकर्तुं मारेभेरावणान्तकः ॥ १० ॥ मधुमासि रघुश्रेष्ठो
ह्यलंकृत्यहयोत्तमम् ॥ चतुरङ्गबलैर्युक्त मृत्विग्भिश्चसमन्वितम् ॥ ११ ॥ रिपुघ्नंभरतंक्षिप्रंसशत्रुघ्न-
मवोचत ॥ भरतभ्रातृसहितो ह्यनुसृत्यत्वमाव्रज ॥ १२॥ चारयामासदेशान्तान् सर्वदेशबहूनिच ॥
सौराष्ट्रसिंधुसौवीर मागधाहूंणकोंकणाः ॥ १३ ॥ कालिङ्गयवनाः शूरा वाह्लीकाःकोशलादयः ॥
अङ्गवङ्गनृपालाश्च द्राविड़ागुर्जराश्चये ॥ १४ ॥ केरलाःकैकयाश्चैव पाश्चात्याऔत्तरीयकाः ॥
पाण्ड्याः पुलिन्दामत्स्याश्चयेद्वीपान्तरवासिनः ॥ १५ ॥ ललाटपट्टलिखितं सौवर्णराघवीयकं ॥
अयोध्याधिपतिः शूरो रामोदशरथात्मजः ॥ १६ ॥ हयमेधंकरोत्यद्य सरयूतीरसंस्थितः ॥
कौशल्यायाःकुमारोभू दंशोविष्णोर्महात्मनः ॥ १७ ॥ याज्ञियाश्वोह्ययंतेन मोचितोद्ययथाविधि ॥ 
तस्याश्वोहयमेधीयो शूराग्रह्णंतुतंहयम् ॥ १८ ॥ एवंविलिख्यतंपत्रे सौवर्णेरमणीयके ॥ वाच-

यन्तोनृपास्सर्वे तेबभूवुःपराङ्मुखाः ॥ १९ ॥ सवाहित्वाहयंभूमौ ससैन्यःपरिपालयन् ॥ भरतो
भ्रातृसहित स्सिन्धुतीरसुपाश्रितः ॥ २० ॥ राजीवोत्पलकल्हार मत्स्यकच्छपराजितं ॥ विमलोदक
कल्लोल द्विजचक्रोपशोभितम् ॥ २१ ॥ सिन्धुतीरंसमुद्वीक्ष्य वासंचक्रेरघूद्वहः ॥ सहस्रकण्ठोदैत्ये-
न्द्रः कश्यपस्यसुतोवली ॥ २२ ॥ मंत्रिवर्गेणधीरेण रक्ताक्षेणसुसंयुतः ॥ यदृच्छयासंचरित्वाद्वी
पान्सर्वान्भुविस्थितान ॥ २३ ॥ सिंधुतीरमुपाश्रित्य दृष्ट्वातंभरतंतदा ॥ आहूयराक्षसंधीर मिदंवचन
मब्रवीत् ॥ २४ ॥ लोहिताक्षभवान्गत्वा गृहीत्वायाहिघोटकं ॥ विसृज्यसशरंचापं तदोद्वीक्ष्यहयो
त्तमम् ॥ २५ ॥ निधायतिलकंभाले मत्तचूर्णविकीर्य्यसः ॥ भरतंसवलंतत्र माययामोहयन्निशि ॥
२६ ॥ यज्ञीयाश्वंगृहीत्वासौ ययौचित्रवतीपुरीम् ॥ ततःप्रभातेविमले वलंदृष्ट्वाह्यनश्वकं ॥ २७ ॥
भरतोभ्रातृसाहितो वलेनमहतावृतः ॥ विंध्यंहिमालयंमेरुं मदूरंनिषधंगिरिं ॥ २८ ॥ हेमकूटंपारि-
पात्रं शैलारण्यंनदीपुरीः ॥ सर्वादिशश्चविदिशो जम्वुद्वीपंव्यचिन्वत ॥ २९ ॥ अदृश्यमानंतु-
रगंभरतश्चिन्तयन्विभुः ॥ लिखितंलेखयित्वातु शरेवध्वासराघवः ॥ ३० ॥ संधायकार्मुकेतं-
तुविससर्जेन्द्रसन्निधौ ॥ सददर्शशरंदिव्यं सलेखंमघवातदा ॥ ३१ ॥ भरतं सिन्धुतीरस्थं 
सभ्रातृकमुपेत्यसः ॥ उवाचवचनंधीरो गुरुणासहदैवतैः ॥ ३२ ॥ इन्द्रउवाच ॥ नजानेहं-
रघुश्रेष्ठ याज्ञियंतेतुरंगमं ॥ त्रिदिवेनास्तितेवाजी क्रोधंत्वंमयिमाकृथाः ॥ ३३ ॥ एवंब्रुवतिदेवेन्द्रे

वृहस्पतिरुवाचतम् ॥ वृहस्पतिरुवाच ॥ तुरङ्गमस्यवृत्तान्तं वदामिश्रृणुराघव ॥ ३४ ॥
सहस्त्रकण्ठोदैत्येन्द्रः कश्यपस्य सुतोबली ॥ दैत्यायां ससमुत्पन्नस्त्रिषु लोकेषुविश्रुतः ॥ ३५ ॥
व०रा० ब्रह्माणंतपसोग्रेण तोषयामासराक्षसः ॥ सराक्षसश्चित्रवतीं पुष्करद्वीपवर्तिनीं ॥ ३६ ॥ श्रृङ्गाट्टा-
॥४०॥ लकसंयुक्तां चैत्यप्रासादसंकुलाम् ॥ द्वात्रिंशद्द्वारसंयुक्तां नानारत्नोपशोभिताम् ॥ ३७ ॥ हस्त्यश्व-
गणसम्पूर्णां रक्षोगणनिषेवितां ॥ दुर्गमांदेवतानीकै र्दुर्गत्रयविशोभिताम् ॥ ३८ ॥ समवाप्यप्रसादेन
सप्तप्राकारशोभिताम् ॥ तस्यामास्तेसदैत्येन्द्रः दैवेनचोदितोधुना ॥ ३९ ॥ राक्षसः कश्चिदागत्य
गृहीत्वातुरगंययौ ॥ तस्यतद्वचनंश्रुत्वा विस्मयाद्भरतोब्रवीत् ॥ ४० ॥ अहंकथंगमिष्यामि जित्वा-
नेष्यामितंकथं ॥ तच्छ्रुत्वाभरतेनोक्तं पुनःप्राहवृहस्पतिः ॥ ४१ ॥ हेराजन्श्रृणुमेवाक्यमसाध्यं-
नास्तितेकिंचित् ॥ गन्तुंतेपुष्करद्वीप मशक्यंतवसाम्प्रतम् ॥ ४२ ॥ रामेणसंयुतास्सर्वे गत्वा
चित्रवतींपुरीं ॥ आगमिष्यसितंजित्वा गृहीत्वातुरगंपुनः ॥ ४३ ॥ इत्युक्तःप्रययौशीघ्रं पूजितो
वैसुरोत्तमैः ॥ तच्छ्रुत्वावचनंतस्य ससैन्यः संनिवृत्यसः ॥ ४४ ॥ सभामण्डपमासाद्य वशिष्ठादि-
मुनीश्वरैः ॥ मन्त्रिभिर्भ्रातृभिस्सर्वै रराजरघुपंगवः ॥ ४५ ॥ सविस्मयोदाशरथिस्तदानघः ४०
सहस्त्रकण्ठस्यपुरींविजेतुं ॥ इयेषभूपालमहीसुरान्वितः समन्त्रिवर्गः सहिराजसत्तमः ॥ ४६ ॥
इति श्रीपद्मपुराणे उमामहेश्वर सम्बादे श्रीराम विजयो नाम चतुर्दशोध्यायः ॥ १४ ॥

ईश्वरउवाच ॥ श्रृणुदेविप्रवक्ष्यामि रामस्यचरितंशुभम् ॥ रामेणयत्कृतंकर्म सहस्त्रग्रीवनाशनम्
॥ १ ॥ सिंहासनगतोराम आनयामासतानृषीन् ॥ वशिष्टोवामदेवश्च वाल्मीकिर्नारदोभृगुः ॥ २ ॥
व०रा० अगस्त्योरैभ्यकःकण्वः कण्डुःशौनकपर्वतौ ॥ सुतीक्ष्णःशंखलिखितौ मार्कण्डेयोत्रिगौतमौ ॥ ३ ॥
॥४१॥ जाबालिर्जमदग्निश्च शतानन्दोप्यथापरे ॥ रामादयोमुनिश्रेष्ठाः प्राप्तास्तेस्तस्यमंदिरं ॥ ४ ॥ समा-
गतान्मुनीन्वीक्ष्य सहसोत्थायचासनात् ॥ प्रणम्यदत्वासनानि पूजांकृत्वापृथक्पृथक् ॥ ५ ॥
स्थित्वासनेचिरंध्यात्वा प्रोवाचमुनिसत्तमान् ॥ श्रृणुध्वंमुनयस्सर्वे मदीयंवाक्यमुत्तमम् ॥ ६ ॥
मयाविसृष्टस्तुरगो गृहीतःकेनरक्षसा ॥ किंकर्त्तव्यंमयातत्र भवद्भिस्तद्विधीयताम् ॥ ७ ॥ रामस्य-
वचनंश्रुत्वा ह्यगस्त्योवाक्यमब्रवीत् ॥ रामचन्द्रमहाबाहो श्रृणुमद्वचनंहितं ॥ ८ ॥ कश्यपस्यसुतो-
दैत्यो सहस्त्रवदनोभवत् ॥ सएवोग्रंतपस्तप्त्वा सम्यग्दत्तवरःसुरैः ॥ ९ ॥ जित्वात्रिलोकान्दैत्येन्द्रो
ह्यष्टौदिग्पालकानपि ॥ मुक्तिकामस्तपश्चक्रे वत्सराणांसहस्त्रकम् ॥ १० ॥ तदातार्क्ष्येसमारुह्य
आविरासीद्रमापतिः ॥ विष्णुरुवाच ॥ किमर्थंतप्यतेदैत्य ब्रूहिसर्वमशेषतः ॥ ११ ॥ अभीष्टंतवदा-
स्यामि तपसातोषितोस्म्यहम् ॥ इत्युक्तःसहदैत्येन्द्र स्तंप्राहरघुपुंगवम् ॥ १२ ॥ मुक्तिकामोह्यहं- ४१
विष्णो दातव्यंत्वत्पदंमम ॥ इतितद्वचनंश्रुत्वा विष्णुःप्राहासुरंपुनः ॥ १३ ॥ भोदैत्यमानुषोभूत्वा
दास्येहंतवकांक्षितं ॥ कुलेदशरथस्याशु ममजन्मभविष्यति ॥ १४ ॥ तेनैवजन्मनाहत्वा रणेत्वां-

दैत्यवल्लभ ॥ शेषत्त्वंतेप्रदास्यामि शयनंमेभविष्यसि ॥ १५ ॥ मदीयंशयनंभूत्वा मदीयंस्थानमेष्यसि ॥
व०रा० इतीरितस्त्वयाराम दैत्येन्द्रःपुरमन्वगात् ॥ १६ ॥ त्वदागमनमाकांक्षन्नास्तेचित्रवतीपुरे ॥ तस्मि-
॥४२॥ न्सपुष्करद्वीपे शुद्धपाथोधिवेष्टिते ॥ १७ ॥ मरणार्थिनोस्यदूतो सौरक्ताक्षइतिविश्रुतः ॥ चोदितो
दैत्यराजेन गृहीत्वातुरगंययौ ॥ १८ ॥ भवान्हिपुष्पकारूढः सुग्रीवादिगणान्वितः ॥ गत्वातंपुष्कर
द्वीपं जित्वाशत्रुंरणेधुना ॥ १९ ॥ देवतानांसुखंकृत्वा गृहीत्वातुरगंपुनः ॥ अयोध्यापुरमागत्य कुरु-
भूयोमहाक्रतुं ॥ २० ॥ सहस्रास्यस्त्वयासोपि निर्जितःशेषतांगतः ॥ सहस्रफणवान्भूत्वा तवशय्या-
भविष्यति ॥ २१ ॥ इत्युक्त्वाविररामाथो अगस्तिर्भगवान्नृषिः ॥ अगस्त्यस्यवचःश्रुत्वा राघवःपर-
वीरहा ॥ २२ ॥ निवर्त्यसर्वान्राजर्षी न्सोदरैःसहितोनघः ॥ सस्मारपुष्पकंरामः स्मरणेनाययौ
चतत् ॥ २३ ॥ दृष्ट्वातत्पुष्पकंराम आरुरोहससानुजः ॥ सुग्रीवोवानरैःसार्द्धं माञ्जनेयाङ्गदादिभिः
॥ २४ ॥ विभीषणोपिरक्षोभिः सायुधैःशतकोटिभिः ॥ नानादेशस्थितायेच नानाद्वीपनिवासिनः
॥ २५ ॥ हस्त्यश्वरथपादाता आहरन्पुष्पकंतदा ॥ अथरामोमहातेजा ययौचित्रवतींपुरीं ॥ २६ ॥
तत्तत्प्राकारशोभाभि रग्निज्वालाभिरावृत्ताम् ॥ द्वात्रिंशद्वारसंयुक्तां वातायनशतैर्युतां ॥ २७ ॥
वीक्ष्यविस्मयमापन्नः पुरद्वारमुपागमत् ॥ चित्रवर्णैःशुकाङ्गस्स न्प्राकारान्तानलंघयत् ॥ २८ ॥ ४२
गत्वातत्पुरतस्थित्वा सौधोपरिसमीरजः ॥ शुकश्चचारतंदैत्यं लोभयन्देहकान्तिभिः ॥ २९ ॥

सहस्रकण्ठोदैत्येन्द्रो मंत्रिभिःपरिवेष्टितः ॥ स्थित्वासभायांपक्षीन्द्रं ददर्शशुकरूपिणम् ॥ ३० ॥
चित्रवर्णंशुकंवीक्ष्य लोहिताक्षमथाब्रवीत् ॥ कोयंशुकाश्चित्रवर्णः क्वागतस्तुकिमागतः ॥ ३१ ॥ प्रेषि-
 तःकेनयःकाश्चित् गृहीतव्योधुनात्वया ॥ इतितेनसमादिष्टो लोहिताक्षोब्रवीच्छुकं ॥ ३२ ॥ कस्मा-
 द्देशादागतोसिपिता तेकश्चसाम्प्रतम् ॥ इन्द्रेणहव्यवाहेन यमेनवरुणेनवा ॥ ३३ ॥ वायुनानैर्ऋते-
नाथ शूलिनाधनदेनवा ॥ केनत्वंप्रेषितश्चासि भवान्कोब्रूहितत्वतः ॥ ३४ ॥ इत्युक्तोमारुतिस्त
त्रसहस्रग्रीवमब्रवीत् ॥ सहस्रकण्ठदैत्येन्द्र मदीयागमनंश्रृणु ॥ ३५ ॥ रामोदाशरथिःश्रीमान् राव-
णासुरमर्द्दनः ॥ यःकरोतिक्रतुंदिव्यं हयमेधंमहाफलं ॥ ३६ ॥ तेनैवप्रेषितश्चास्मि सुग्रीवसचिवो-
स्म्यहम् ॥ आञ्जनेयइतिख्यातो वानरोवायुनन्दनः ॥ ३७ ॥ त्वदीयेनैवदूतेन याज्ञीयाश्वोहृतः
किल ॥ सरामःसोदरैस्सार्द्धं सुग्रीवोवानरैस्सह ॥ ३८ ॥ विभीषणोराक्षसैश्च भूत्वाद्वीपनिवासिनः ॥
युष्मत्पुरसमीपेतु आगताःसमरैषिणः ॥ ३९ ॥ रामचन्द्रःपुरोवाह्ये स्थित्वामांप्रैषियत्किल ॥
अहंतुभ्यंहितंवच्मि श्रृणुमद्वाक्यमुत्तमम् ॥ ४० ॥ सहस्रग्रीवदैत्येन्द्र हयंतस्मैप्रदापय ॥
नोचेत्तवहरिष्यन्ति रामबाणाःशिरांसिवै ॥ ४१ ॥ इत्युक्तःक्रोधताम्राक्षः सहस्रा-
स्योब्रवीदिदम् ॥ रामःकःकोभवानद्य कुतआयासिवानर ॥ ४२ ॥ अत्रकिंतिष्ठसेवीर 
नमोक्ष्येतुरगंकचित् ॥ निवेदयत्वंगच्छाद्य तस्मैरामायमद्वचः ॥ ४३ ॥ इत्युक्तोराक्षसानाह

गृह्यतामेषदुर्मतिः ॥ इत्युक्तंतद्वचःश्रुत्वा शुकरूपंविसृज्यसः ॥ ४४ ॥ खेचरःकपिरूपेण निपत्य-
तस्यमूर्धसु ॥ पातयित्वाकिरीटानि भूषणानिविदार्य्यसः ॥ ४५ ॥ उत्पाट्यस्तम्भमेकंतु ताडया-

मासमारुतिः ॥ एतस्मिन्नन्तरेदैत्या लोहिताक्षादयःकपिं ॥ ४६ ॥ मुद्गरैःपरिघैस्तीक्ष्णैः

शूलैःकुन्तैःपरश्वधैः ॥ बाणैःसंताड़यामासुः सहस्रग्रीवचोदिताः ॥ ४७ ॥ हनूमानपिवालेन
ताड़यामासराक्षसान् ॥ एवंगृहीत्वातान्सर्वान् भ्रामयित्वाविन्यक्षिपत् ॥ ४८ ॥ ततोहनूमानुत्कृत्य
रामसन्निधिमाययौ ॥ नमस्कृत्वाथरामाय सहस्रग्रीवभाषितं ॥ ४९ ॥ न्यवेदयत्सतत्सर्वंश्रुत्वारामो-
महाबलः ॥ सुग्रीवादिकपिश्रेष्ठान ब्रवीत्सामितिंजयः ॥ ५० ॥ गच्छन्तुवानरास्सर्वे युद्धायसह-
राक्षसैः ॥ इत्युक्तास्तेकपिश्रेष्ठा प्रापुस्तेतत्पुरींततः ॥ ५१ ॥ शृङ्गाण्यारुह्यकपयः प्राकारानवतीर्य्यच ॥
सिंहनादंततश्चक्रुः सुग्रीवप्रमुखास्तदा ॥ ५२ ॥ सहस्रकराठानु चरानिर्ययुर्नगरात्ततः ॥ गज-
वाजिरथारूढ़ा स्सहस्रग्रीवचोदिताः ॥ ५३ ॥ सिंहनादंप्रकुर्वाणा स्तस्थुर्युद्धाभिकांक्षिणः ॥
दृष्ट्वाङ्गदःसमायातान् सुग्रीवःपवनात्मजः ॥ ५४ ॥ गजोगवाक्षोगवयः शरभोनीलरम्भकौ ॥
सुषेणजाम्बवत्तार मैन्दद्विविदधूम्रकाः ॥ ५५ ॥ एतेचान्येकपिश्रेष्ठा पर्वतानपिपादपान् ॥
गृहीत्वासंययुस्तत्र तदारामप्रचोदिताः ॥ ५६ ॥ ज्वालामुखेनसुग्रीवो लोहितास्येनचाङ्गदः ॥ 
नीलोपितीक्ष्णदंष्ट्रेण रक्ताक्षोपिहनूमता ॥ ५७ ॥ युद्धंकुर्महात्मानः अन्योन्यजयकांक्षिणः ॥

पादपैःपर्वताग्रैश्च जघ्नुस्तेराक्षसान्बहून् ॥ ५८ ॥ राक्षसास्तेशरैस्तीक्ष्णै र्निजघ्नुःकपिकुंजरान् ॥
ज्वालामुखोबवर्षाजौ सुग्रीवेशरसंततिम् ॥ ५९ ॥ तानन्तरिक्षेसुग्रीवः पादपैराच्छिनतदा ॥
ज्वलामुखंचसुग्रीवः चरणाभ्यामताडयत् ॥ ६० ॥ तस्यपादप्रहारेण ममारसहिराक्षसः ॥ रक्ता-
क्षोमारुतिंतत्र लोहितास्योङ्गदंतदा ॥ ६१ ॥ तीक्ष्णदंष्ट्रोपिनीलंच बवर्षशरसंततिं ॥ लोहितास्य-
मङ्गदस्तु मुष्टिनाप्राहरद्युद्धि ॥ ६२ ॥ यन्मुष्टिनैवनिहतः सोपिदेहममुञ्चत ॥ हनूमानपिरक्ताक्षं
बालेनावष्टभ्यखेचरः ॥ ६३ ॥ भ्रामयित्वापातितंच चूर्णतांसमुपानयत् ॥ नीलोपिवज्रदंष्ट्रस्य
गृहीत्वाचरणौतदा ॥ ६४ ॥ द्वेधाविभज्यतंवीरं पातयामासभूतले ॥ तेतानसुरसंघातान् सहस्रास्य-
स्यवानराः ॥ ६६ ॥ शैलैर्वृक्षैःकरैर्वा पिनिजघ्नुर्दशनैःपदैः ॥ एवंविनिहतास्सर्वे राक्षसाःकपिभि-
स्तदा ॥ ६७ ॥ हतशेषाःसमाजग्मुः सहस्रग्रीवसन्निधिं ॥ तेगत्वामरणंतेषां राक्षसानांन्यवेदयन्
॥ ६८ ॥ ततःपरंराक्षसपुङ्गवानां निशम्यनाशंकपिसैन्यमुख्यैः ॥ सहस्रकण्ठोप्रलयानलोयथा
जाज्वल्यमानःसरणायनिर्ययौ ॥ ६९ ॥ इति श्री पद्मपुराणे श्रीराम विजयोनाम पंचदशोध्यायः
॥ १५ ॥ ईश्वरउवाच ॥ सहस्रकण्ठोदैत्येन्द्रः कोटीनांकोटिभिर्वृतः ॥ राक्षसानांच 
मुख्यानां युद्धेविजयकाङ्क्षिणाम् ॥ १ ॥ पताकाध्वजमुख्यैश्च मौक्तिकच्छत्रचामरैः ॥
वन्दिमागधसूतैश्च तूर्य्यघोषैरलंकृतः ॥ २ ॥ भेरीमृदंगनादैश्च चतुर्वाद्यविघोषितैः ॥ नागाश्वरथ-

पादाते र्निर्ययुर्नगरात्ततः ॥ ३ ॥ उल्लङ्घ्यसप्तप्राकारान् योजनानांशतोन्नतान् ॥ हस्तान्प्रसार्य्य-
संगृह्य सुग्रीवादीनभक्षयत् ॥ ४ ॥ वदनेषुप्रविश्यैते कर्णेभ्यःकपिकुंजराः ॥ नासिकाभ्यश्चनिर्गत्य

राभसन्निधिमाययुः ॥ ५ ॥ एतस्मिन्नन्तरेदेवा यक्षविद्याधरोरगाः ॥ किंपुरुषाःकिन्नराश्चैव सिद्धा-

स्साध्याश्चगुह्यकाः ॥ ६ ॥ ब्रह्मर्षयोमहर्ष्याद्याः पिशाचादैत्यराक्षसाः ॥ द्रष्टुंसमागतायुद्धं राम-
साहस्रकण्ठयोः ॥ ७ ॥ सहस्रकन्धरंदृष्ट्वा वभूवुर्युद्धकांक्षिणः ॥ शत्रुघ्नोभरतस्तत्र लक्ष्मणश्चमहा-
वलः ॥ ८ ॥ स्वसैन्यंभक्षितंदृष्ट्वा राघवःसोदरैस्सह ॥ आहूयराक्षसेन्द्रंतं सुग्रीवाङ्गदमारुतीन्
॥ ९ ॥ पुष्पकेतान्समारोप्य स्वयमप्यारुरोहतत् ॥ सर्वेपिपुष्पकेस्थित्वा युद्धंकर्तुंप्रचक्रमुः ॥ १० ॥
अन्तरिक्षगतेतस्मिन् पुष्पकेकामगेशुभे ॥ सर्वान्निक्षिप्यरामोपि विभीषणमुवाचह ॥ ११ ॥
विभीषणासुरश्रेष्ठ पश्यसाहस्रकन्धरम् ॥ कुम्भकर्णोतिकायश्च दशास्यःशतकन्धरः ॥ १२ ॥ ईदृशो-
राक्षसःकश्चिन्न चकुत्रापिदृश्यते ॥ इत्युक्त्वाज्ञापयद्रामो युद्धायकपिराक्षसान् ॥ १३ ॥ अनुज्ञातः
सरामेण ह्यन्तरिक्षगतोब्रवीत् ॥ विभीषणोहंदैत्येन्द्र युद्धंकुरुमयासह ॥ १४ ॥ इत्युदीर्य्यतदातीक्ष्णा
न्सवबर्षवहूनपि ॥ विभीषणविमुक्तां स्ताञ्छरान्चिच्छेदसायकैः ॥ १५ ॥ ततःपरन्तुशत्रुघ्नो भरतो-

लक्ष्मणोधनुः ॥ सज्जंकृत्वाप्रमुमुचुः शरवर्षाणिसंयुगे ॥ १६ ॥ सहस्रकण्ठस्तान्छित्वा शक्ति-
तोमरमुद्गरैः विभीषणंसमालिङ्गय वध्वोत्क्षिप्यकरैर्भुवि ॥ १७ ॥ पदाभ्यांघट्टितंतेन मूर्च्छितोभूद्वि-

भीषणः धृत्वाधनूंषिहस्तानां सहस्रेणतदासुरः ॥ १८ ॥ शरान्हस्तसहस्रेण ववर्षकापिकुंजरान् ॥
 सुग्रीवमङ्गदंधूम्रं नलंनीलंसमीरजम् ॥ १९ ॥ तारंदधिमुखंरंभं सर्वान्वानरपुङ्गवान् ॥ पातयामास
 विशिखै रनेकैःसपृथक्पृथक् ॥ २० ॥ संधायविविधास्त्राणि शत्रुघ्नंभरतंतदा ॥ लक्ष्मणंचमहावीरो
ववर्षाम्बुदसन्निभः ॥२१॥ एकंदशशतंतेषु सहस्रमयुतंतदा ॥ नियुतंप्रयुतं कोटिंप्रकोटीःशतकोटिकाः
॥२२॥ अर्बुदान्यर्बुदान्येव संधायविशिखान्धनौ ॥ शिरोङ्गंपादपर्य्यन्तं भेदयामासवानरान् ॥ २३ ॥
भरतस्यचसौमित्रेः शत्रुघ्नस्यव्यदारयत् ॥ आभान्तिशरनिर्भिन्नाः पुष्पिताइवकिंशुकाः ॥ २४ ॥
तदालक्ष्मणशत्रुघ्न भरताःसमितिंजयाः ॥ प्रमाणातीतसर्वाङ्गे सहस्रशतयोजने ॥ २५ ॥ मेरुर्नि-
युतविस्तार योजनोदैत्यवल्लभः ॥ राक्षसेन्द्रोद्रिसंघाते वेष्टितःसइवावभौ ॥ २६ ॥ तस्यगात्रसमा-
श्लिष्टा वानराःसंप्रकाशिरे ॥ सुरालयसमाश्लिष्ट लोकाइवरणाङ्गणे ॥ २७ ॥ सहस्रकण्ठःसंगृह्य
पाणिभिस्तानभक्षयत् ॥ अर्दयत्पादसंघातैः दिव्यास्त्रैरप्यपातयत् ॥ २८ ॥ सहस्रवाणैर्विव्याध
सुग्रीवंसविभीषणम् भरतंलक्ष्मणंतत्र शत्रुघ्नंयुगपत्पृथक् ॥ ३९ ॥ तस्यतीक्ष्णशराघतैः
सर्वेनिपतिताभुवि ॥ पातयित्वाचमूंसर्वां ससुग्रीवंसराघवम् ॥ ३० ॥ सराक्षसस्तदाकृत्वा 
सहस्रग्रीवआवभौ ॥ दृष्ट्वारामोमहातेजा श्चमूंविस्मयमानसाः ॥ ३१ ॥ ससज्यंधनुरादाय
सशरोभिमुखोययौ ॥ एवंसमुद्यतंवीरं राघवंरणकोविदं ॥ ३२ ॥ समालक्ष्यतदाधीरः प्रलयाम्बु-

धरोयथा ॥ आजगामतदागर्जन् ज्वलज्वालानलोयथा ॥ ३३ ॥ कृताट्टहासवदनः कुर्वन्रामस्य-
विस्मयम् ॥ दिव्यास्त्रशस्त्रसंयुक्तः प्रपेदतंरघूत्तमम् ॥ ३४ ॥ त्रैलोक्यवीरेणरघूत्तमेनवै मृगाधिपे-
 नेवसहस्रकंधरः ॥ आयोधनेमत्तगजेन्द्रवत्तदा समाययावात्तभुजैःसहस्रशः ॥ ३५ ॥ इति श्री
 पद्मपुराणे उमामहेश्वरसम्बादे श्रीरामविजये सहस्रमुखयुद्धं नामषोडशोऽध्यायः ॥ १६ ॥
ईश्वरउवाच ॥ सहस्रकन्धरोहस्तैर्धृ तवाणशरासनः ॥ रामस्याभिमुखेस्थि त्वाजगादपरुषाक्षरम्
॥ १ ॥ त्यत्काराज्यंभवान् रामदण्डकारण्यमाश्रितः विराधश्चकवन्धश्च हत्वाप्राप्यसमीरजं ॥
२ ॥ सुग्रीवसाहितःसंख्ये वालिनंवलशालिनम् ॥ हत्वातंवानरैर्युक्तः सीतायाःकुशलंतदा ॥ ३ ॥
ज्ञात्वाजलनिधिंतीर्त्वा रून्धलन्लङ्कापुरींततः ॥ जित्वादशास्यंसंग्रामे पौलस्त्यंलोककंटकम् ॥ ४ ॥
अयोध्यांसीतयासार्धं प्राप्तवानसिराघव ॥ दशास्यंप्राकृतंजित्वा बलवानितिगर्वितः ॥ ५ ॥
द्वीपान्तीर्त्वोदधीन्तीर्त्वा किमायासिममान्तिकम् ॥ इन्द्रादिलोकपालाश्च जित्वाहंरणकर्मणि ॥
६ ॥ प्राकृतानिहतायेवै राक्षसारावणादयः ॥ मन्यसेमांतथाराम प्रख्यातवलपौरुषं ॥ ७ ॥
अवेहित्वंरणेशूर सहस्रग्रीवमुत्तमम् ॥ त्वदीयाश्वंनमोक्ष्येह मनुजानामित्वाधुना ॥ ८ ॥ गच्छे-
दानींवलैर्युक्त स्त्वदीयंपत्तनंपुनः ॥ पश्यतस्तेनचेत्सर्वं बलमत्रवनौकसां ॥ ९ ॥ भक्षयिष्याम्य- 
हंत्वाद्य रणेसभ्रातृकंनृप ॥ निशम्यराघवोधीरः सहस्रग्रीवभाषितम् ॥ १० ॥ अब्रवीद्राक्षसंवाक्यं

सहस्रग्रीवमुद्धृतम् ॥ त्वंमुधाकथ्यसेदैत्य दर्शयत्वंपराक्रमम् ॥११॥ मदीयंतुरगंचाद्य याज्ञीयंमेदद-
स्वतं ॥ नोचेन्माद्विशिखैस्तीक्ष्णैः पातयिष्येशिरांसिते ॥१२॥ इत्युक्तःसचदैत्येन्द्रो ववर्षशरसंततिम् ॥
व०रा० रामोपिविशिखैस्तीक्ष्णै राच्छिनाद्विशिखावलिं ॥१३॥ शक्तितोमरकुन्तासि भिण्डिपालैरभेदयत् ॥
॥४९॥ ऐंद्रंपाशुपतंयाम्यं वायव्यंवारुणंतदा ॥१४॥ सौरंब्राह्म्यंसकौवेरं ह्याग्नेयंवैष्णवंपरम् ॥ दैत्येन्द्रस्यवि-
नाशाय मुमोचास्त्राणिराघवः ॥१५॥ जहारसमरेदैत्यस्त दस्त्राणिशरोत्तमैः ॥ इत्थंराघवदैत्येन्द्रौ
भ्रामयन्तौपरस्परम् ॥१६॥ वलयागामिनौवीरौ नानागतिविशारदौ ॥ कण्ठीरवनिभौतूभा वन्योन्य-
जयकांक्षिणौ ॥१७॥ युध्यमानौतदाशूरौ पर्वतेन्द्राविवस्थितौ ॥ आशोभेतामुभौयुद्धे प्रख्यातवल-
पौरुषौ ॥१८॥ अन्तरिक्षान्तरस्थौ द्वौमल्लयुद्धविशारदौ ॥ परस्परोपमौख्यातौ पारावारौगिरीइव
॥१९॥ सर्वेदेवाःसदैतेया यक्षाःसाध्याश्चखेचराः विस्मयंपरमंचक्रुः समुद्वीक्ष्यरणंतयोः ॥२०॥
सुग्रीवोह्यङ्गदोनीलो हनूमांश्चविभीषणः ॥ पादपैःपर्वतैर्दन्तैर्नखैश्शृङ्गैर्व्यपोथयत् ॥२१॥ निजघ्नू-
राक्षसान्सर्वान् ज्वलज्ज्वालानलोपमान् ॥ यामार्द्धनिहतास्सर्वे राक्षसाःशंखकोटयः ॥२२॥ अथरामो
महातेजाभल्लैराशीविषोपमैः ॥ छेदयामासहस्तांश्चशिरांस्यथबहूनिच ॥ २३ ॥ समुद्वीक्ष्यतदारामं
स्वशिरःकरघातकम् ॥ गृहीत्वाभ्रामयित्वालं वेगेनाक्षिपतक्षितौ ॥२४॥ अर्द्धचन्द्रेणान्तरिक्षे छित्वा- ४९
तस्यकरौभुवि ॥ पातयामासरामोपि लाघवंदर्शयन्रिपोः ॥२५॥ सहस्रकण्ठोदैत्येन्द्रो बिस्मयाकुल-

मानसः ॥ राममालक्ष्यसमरे प्रवृद्धंरणपण्डितम् ॥ २६ ॥ एकावशेषितशिरा उवाचरुषयान्वितः
कुतोगच्छसिरामत्वं रणेत्वांनत्यजाम्यहम् ॥२७॥ यज्ञीयाश्वंनदास्यामि भवान्यदिपुमान् भवेत् ॥
जित्वामांसमरेराम गृहाणतुरगंतव ॥२८॥ नोचेत्प्राणान्हरिष्यामि सर्वेषांचवनौकसाम् ॥ ससो-
दरस्यसेनायाः बृथायासेनाकिंप्रभो ॥२९॥ विदार्य्यमारणीयास्यं हत्वैनंमुक्तिवल्लभम् ॥ इत्युक्तवन्तं-
दैत्येन्द्रं सहस्रास्यंरघुत्तमः ॥३०॥ नारायणास्त्रंसंधा यकार्मुकेमुमुचेतदा ॥ तदस्त्रंमन्त्रजुष्टंसत् ज्वल-
ज्ज्वालानलंमहत् ॥३१॥ प्रविश्यहृदयंतस्य प्राणान्हत्वाययौपुनः ॥ सहस्रकण्ठनालेभ्यस्तद्रामा-
न्तिकमाययौ ॥३२॥ रामवाणाविनिर्भिन्न शरीरंसंत्यजन्रणे ॥ सहस्रफणवान्शेष आसीद्विष्णुपदं-
गतः ॥३३॥ रामेणानिहतेदैत्ये श्रेष्टेशेषाःप्रदुद्रुवुः ॥ ततोहृष्टाःसगन्धर्वाः देवाःसर्षिगणस्तदा ॥३४॥
अभूवन्राक्षसगणा विभीषणवशानुगाः ॥ ब्रह्मादयोदेवमुख्याः पतन्तंरणमूर्धनि ॥३५॥ अगस्त्यदर्श-
नाद्भू मिंविशन्तमिवभूधरम् ॥ विन्ध्याख्यंरामचन्द्रस्य सायकैर्निहतंरणे ॥३६॥ सहस्रकण्ठमुद्वीक्ष्य
रामस्यनिकटंययुः ॥ ब्रह्मादिभिःसुरैस्सार्द्धं पुष्पवृष्टिंमुदान्विताः ॥ ३७ ॥ ततोह्यमृतवृष्टिंच बवर्षमघवा-
तदातद्भूवोत्थितंसर्वं रामसैन्यंसविस्मयम् ॥ ३८ ॥ सहस्रग्रीवतनयं पुष्कराक्षंविभीषणः ॥ आदाय- ५०
रामपदयोः पातयित्वावचोब्रवीत् ॥३९ ॥ सहस्रग्रीवतनयो विधेयस्तवकिङ्करः ॥ रामराघवराजेन्द्र
शरणागतवत्सल ॥ ४० ॥ श्रुत्वाविभीणवचः पतन्तंचरणद्वये ॥ पुष्कराक्षंसमालक्ष्य उत्तिष्ठेतिवचो-

ब्रवीत् ॥ ४१ ॥ अस्यांपुर्य्यांचित्रवत्यां पुष्कराक्षसुखंवस ॥ कुरुतातस्यसंस्कारं भयम्मत्तोऽस्तिनो-
तव ॥ ४२ ॥ इत्युक्त्वाभरतंप्राह शरणागतवत्सलः ॥ एनमादायगच्छत्वंपुरीं चित्रवतींशुभां ॥४३॥
 सहस्रग्रीवसंस्कारं कारयित्वायथाविधि ॥ पुष्कराक्षंचित्रवत्या मभिषिच्यतदात्मजं ॥ ४४ ॥ तंमंत्रि-
 वर्गसहित मानयित्वातदन्तिकम् ॥ इत्युक्तोभरतःश्रीमान् पुष्कराक्षेणसंयुतः ॥ ४५ ॥ प्रविश्य
राजमार्गेण ददर्शभवनोत्तमम् ॥ सहस्रग्रीवसदनं सुमेरुशिखरोपमम् ॥ ४६ ॥ सारिकाकीरसंघुष्टं
केलिमालाविराजितम् ॥ नानारत्नसमाकीर्णं कपाटद्वारशोभितम् ॥ ४७ ॥ शातकुंभमयैर्दिव्यैः
कलशैःसुमनोहरम् ॥ मेरुप्राकारसंयुक्तं वातायनशतान्वितम् ॥ ४८ ॥ पताकाध्वजसंकीर्णं
वितानालंकृतंमहत् ॥ मुक्तामणिस्वस्तिकैश्च सर्वतोभद्रसंयुतम् ॥ ४९ ॥ नानाकुसुमसंच्छन्नं
प्रमदापुञ्जरंजितम् ॥ रासमण्डलसंदीप्तं सौधराजिविराजितम् ५० ॥ तस्मिन्नन्तःपुरेधीमान् प्रवि-
शन्भरतस्तदा ॥ दुःखितंस्त्रीजनंवीक्ष्य चाश्वास्यकृपयापुनः ॥ ५१ ॥ सहस्रग्रीवसंस्कारं कारया-
माससूनुना ॥ दशाहानन्तरंकार्य्यं प्रेतकर्मसमाप्यच ॥ ५२ ॥ रत्नसिंहासनेदिव्ये कृतकौतुकमङ्गले ॥
संस्थाप्यैवपुष्कराक्ष मभिषिच्यतदात्मजं ॥ ५३ ॥ सर्वतीर्थोदकैस्तत्र सौवर्णकलशस्थितैः ॥ 
मन्त्रिवर्गसमायुक्तं छत्रचामरशोभितम् ॥ ५४ ॥ पुष्कराक्षंसमादाय रामान्तिकमुपाययौ ॥ अथ-
रामस्यचरणौ स्पृशन्वैसरसेक्षणः ॥ ५५ ॥ आनीयतुरंगंप्रीत्या भक्त्यारामायसंददौ ॥ किंकरोऽहं

तवविभो तदाज्ञापययन्मतम् ॥ ५६ ॥ एवंविनिर्जित्यसहस्रकन्धरं सुग्रीवरक्षोनृपसंघयुक्तः ॥
ब्रह्मादिभिर्देवगणैस्सुपूजि तस्तदावभौतत्रसुखेनरामः ॥ ५७ ॥ इति श्रीपद्मपुराणे वाशिष्टरामायणे
सप्तदशोध्यायः ॥ १७ ॥ ईश्वर उवाच ॥ शृणुदेविप्रवक्ष्यामि ब्रह्मादेवर्षिसंयुतः ॥ उवाचवचनंतत्र
रामंराजीवलोचनं ॥ १ ॥ ब्रह्मोवाच ॥ त्वमेवपरमंब्रह्म त्वयिसर्वंप्रतिष्ठितं ॥ दृश्यतेसर्वभूतेषु
ब्राह्मणेषुविशेषतः ॥ २ ॥ दिक्षुसर्वासुगगने पर्वतेषुवनेषुच ॥ अन्तेपृथिव्यास्सलिले वायौवह्नौ
महोदधौ ॥ ३ ॥ अहंतेहृदयंराम जिह्वादेवीसरस्वती ॥ देवागात्रेषुरामस्य महादेव्योप्यहंकृतिः
॥ ४ ॥ सप्तर्षयोवशिष्टाद्याः देवास्साग्निपुरोगमाः ॥ पशुपक्षिमृगाकीटा समुद्राःकुलपर्वताः ॥ ५ ॥
स्थावराजङ्गमाये येभुवनानिचतुर्दश ॥ सर्वंगतःसर्वसाक्षी चिन्मयःतमसःपरः ॥ ६ ॥ निर्विकल्पो
निराभासोनिः शंकोनिरुपद्रवः ॥ निर्लोपःसकलाध्यक्षो महापुरुषईश्वरः ॥ ७ ॥ ब्रह्माविष्णुश्चरुद्रश्च
शंकरश्चनिरंजनः ॥ त्वत्तोनान्यःपरोदेव त्रिषुलोकेषुविद्यते ॥ ८ ॥ इतिस्तुत्वादेवगणैश्च तुर्वक्त्रो-
ब्रवीत्पुनः ॥ रामत्वंदुष्टनाशाय ह्यवतीर्णोरघोःकुले ॥ ९ ॥ अस्माभिःप्रार्थितः पूर्वंतत्सत्यंकृत-
वानसि ॥ याहिरामगृहीत्वाश्वं यज्ञशेषंसमापय ॥ १० ॥ कलास्तवसुरेन्द्राद्याः संतर्पयविधानतः ॥
एकादशसहस्राणा मब्दानांपालयन्क्षितिं ॥ ११ ॥ ततःपरंनिजंधाम यास्यसित्वंपरात्परम् ॥ 
पुनस्त्वांयज्ञशालायां दीक्षितंसहसीतया ॥ १२ ॥ द्रक्ष्यामहेसुरैस्सार्धं शंकरेणमहर्षिभिः ॥ इति-

विज्ञाप्यदेवेशो ययौदेवगणैस्सह ॥ १३ ॥ रामस्यचरणद्वंद्वं रत्नपुष्पैरपूजयत् ॥ एवंसंपूजितस्तेन
 पुष्कराक्षेणराघवः ॥ १४ ॥ पुष्पकराक्षंसंनिवर्त्य रामःसैन्यसमावृतः ॥ पुष्पकंतत्समारुह्य देवता-
गणभूषितः ॥ १५ ॥ सप्तद्वीपानतिक्रम्य हेमाद्रिंसमुपागमत् ॥ तत्रदेवगणान्हित्वा मेरौस्थित्वा-
 महाबलः ॥ १६ ॥ मेरुणादत्तमखिलं रत्नजातंप्रगृह्यसः ॥ भेरीरवैस्तूर्यघोषै विदारितदिगन्तरः
॥ १७ ॥ मङ्गलालङ्कृतंदिव्य मयोध्यानगरंययौ ॥ सीतयासहितःश्रीमान श्वमेधमहाक्रतौ ॥१८॥
कृत्वाथऋत्विग्वरणं वशिष्ठादीन्महामुनीन् ॥ वशिष्ठोवामदेवश्च विश्वामित्रोथगौतमः ॥ १९ ॥
जावालिर्जमदग्निश्च मार्कण्डेयोपिमौद्गलः ॥ कश्यपोत्रिर्भरद्वाजः सुतीक्ष्णोगस्त्यनारदौ ॥ २० ॥
रामादयोमुनिश्रेष्ठा रामस्यपरमात्मनः ॥ यथाशास्त्रमनुक्रम्य ह्यश्वमेधमहाक्रतौ ॥ २१ ॥ शाला-
श्चसरयूतीरेता सुवेदीःप्रकल्प्यच ॥ सीतयासहितंरामं सदीक्षमुपवेश्यच ॥ २२ ॥ आदौतुप्रातः
सवनं पश्चान्मध्यंदिनंतदा ॥ तृतीयसवनंचेति कर्मकुर्य्युर्यथाविधि ॥ २३ ॥ स्वाहाकारवषट्कारैः
ऋग्यजुःसाममंत्रजैः ॥ अग्निष्टोमातिरात्रौच पौण्डरीकमतःपरम् ॥२४॥ वपनंगारुड़ंहोमं प्रकृतिर्वि-
कृतिस्तथा ॥ कोविदारैस्त्रिभिःषड्भिर्वि विल्वौदुम्बरखादिरैः ॥२५॥ वस्त्रालङ्करणोपेता यूपास्तत्रैकविं-
शतिः ॥ रात्रावश्वस्यशुश्रूषां कुर्वतीजानकीतदा ॥ २६ ॥ न्यवसत्शान्ततोदेवा स्समाहूताःसमाययुः ॥ 
ववन्धतत्रयूपेषु कुशाग्रैस्त्रिशतान्पशून् ॥ २७ ॥ यूपाग्रेरज्जुभिर्वद्धं मंत्रपूतंहयंततः ॥ छेदयित्वा-

वशिष्ठस्त द्वपामुद्धृत्त्यसत्विंजः ॥ २८ ॥ श्रोश्रावयेतिमन्त्रेण हव्यवाहेव्यनिक्षिपत् ॥ देहस्यकृन्तनं-
कृत्वा ह्यङ्गैर्होममथाकरोत् ॥ २९ ॥ एवंशतत्रयस्यापि पशूनामङ्गहोमजं ॥ रामस्यहयमेधंतंद्रष्टुम-
भ्यागताजनाः ॥ ३० ॥ ब्राह्मणाःक्षत्रियावैश्याः शूद्रास्तत्रसविस्मयाः ॥ अहोरात्रंददावन्नं
सर्वेभ्यश्चसुसंस्कृतं ॥ ३१ ॥ अन्नकूटैश्चवहुभिः पर्वतैरिवसंस्थितैः ॥ यूथैर्नानाविधैःशाकैः हिंगूल-
वणमिश्रितैः ॥ ३२ ॥ मरीच्यैलाज्यसंमिश्रै रसालफलसंयुतैः ॥ तिलमाषादिचूर्णाक्तै रन्नैर्बहुभिर-
न्वितं ॥ ३३ ॥ द्राक्षेक्षुरंभापनस नारिकेलफलैर्युतम् ॥ सिद्धार्थरससंयुक्तै श्चूतखण्डैरलङ्कृतम्
॥ ३४ ॥ सौवर्णैराजतैरन्ने भाजनेपर्णनिर्मिते ॥ शाल्योदनंविनिक्षिप्य प्राज्यमाज्यंपुटेषुच ॥ ३५ ॥
यथारुचिप्रभुंजध्वं भुञ्जध्वमितिचाब्रुवन् ॥ गृह्यतांगृह्यतामन्नं भूयोभूयोह्यपेक्षितं ॥ ३६ ॥ इति-
सर्वेषुतृप्तेषु भक्ष्यैरुच्चावचैरपि ॥ हयमेधमहायज्ञे राघवःसीतयासह ॥ ३७ ॥ दीक्षान्तेवभृथस्नातो
शतकोटीसुवर्णकाः ॥ आनीयब्राह्मणेभ्यश्च ऋत्विग्भ्यःप्रददौनृपः ॥ ३८ ॥ अध्वर्यूद्गातृहोतृभ्यो
दशकोटिसुवर्णकम् ॥ वहुमान्यतदाभूपान् नानाद्वीपेभ्यश्चागतान् ॥ ३९ ॥ यथार्हमर्हणांकृत्त्वा
परिवारसमान्वितान् ॥ सुग्रीवंराक्षसेन्द्रंच प्रस्थाप्यपरिवारकैः ॥ ४० ॥ सीतयासहरामोपि सोदरैः
सहितोनघः ॥ दशवर्षसहस्राणि ह्ययोध्यांपालयन्पुरीं ॥ ४१ ॥ चक्रेरामोश्वमेधाना मेकोनशतमे- ५४
षसः ॥ अथतांजानकींत्यक्त्वा बाल्मीकेराश्रमंप्राति ॥ ४३ ॥ सीताप्रतिनिधिंकृत्वा सुवर्णप्रतिमां-

तदा ॥ भूमिनीलादिनारीभि रश्वमेधंचकारसः ॥ ४३ ॥ पश्चाद्वर्षसहस्रंच पालयन्पृथिवीमिमां ॥
अयोध्यायांविनिक्षिप्य पुत्रौकुशलवाविह ॥ ४४ ॥ सोदरैःसहितोरामः साकेतपुरवासिभिः ॥
तृणपाषाणवृक्षाद्यैः स्नात्वैवसरयूजले ॥ ४५ ॥ निजनामयशोभमौ स्थापयित्वादिवंययौ ॥ राम-
स्यपुरतःसीता प्रविवेशधरातलम् ॥ ४६ ॥ पुनर्वैकुण्ठमासाद्य चिक्रीडेरमयासह ॥ वैदेहीरूपया-
रामो विष्णुरूपेणसर्वदा ॥ ४७ ॥ ईश्वरउवाच ॥ श्रीरामविजयंनाम पवित्रंपापशोधनम् ॥
रामस्यचरितंपुण्यं सहस्रग्रीवमर्द्दनम् ॥ ४८ ॥ येशृृण्वन्तिसदाभक्त्या येलिखन्तिमनीषिणः ॥
येवाचयन्तिसततं मुच्यन्तेसर्बपातकैः ॥ ४९ ॥ युद्धोद्यतेविवादेच नतेयान्तिपराजयम् ॥ तेप्राप्नुव-
न्तिविजयं दुर्बलाश्चबलीयसा ॥ ५० ॥ पुत्रैःपौत्रैश्चसदासद्दारैःसुखमेधते ॥ गजबाजिरथौघैश्च
धनैर्धान्यैर्दिनेदिने ॥ ५१ ॥ भुक्त्वाभोगान्क्षितौभूरि तेयान्तिपरमंपदम् ॥ मारुतेःपुरतोनित्यं
सर्वकाममवाप्नुयात् ॥ ५२ ॥ सूतउवाच ॥ ईश्वरेणोदितंसर्वं श्रीरामविजयंशुभम् ॥ निशम्यपार्व-
तीतत्र रामभक्तिसमन्विता ॥ ५३ ॥ स्तुवन्तीशंकरंभूयो शश्वत्प्रीतिपरायणा ॥ इतिसूतस्य-
वचनंश्रुत्वातेऋषयस्तदा ॥ ५४ ॥ सविस्मयाशौनकाद्या रामभक्तिसमन्विताः ॥ श्रीरामविजया- 
त्पुण्यात् प्रीतिमापुस्तदाभृशम् ॥ ५५ ॥ जगदुदयलयस्थितीशमेतं गुणरहितंगुणसङ्गिनासुदारम् ॥
निजचरणसरोजभक्तभक्तं धरणिसुतारमणंश्रयामनित्यम् ॥ ५६ ॥ इति श्री पद्मपुराणे

उमामहेश्वर सम्बादे श्री रामविजयो नामाष्टादशोऽध्यायः ॥ १८ ॥ शुभसम्बत् ॥ १९६५ के ॥ ❀



॥ इति ॥